ISSN 2394-9732

# पुराणज्योत्स्ना

## नवकलेवरविशेषांकः






पुराणेतिहासविभागः
राष्ट्रियसंस्कृतसंस्थानम् (मानितविश्वविद्यालयः)
श्रीसदाशिवपरिसरः, पुरी-७५२००१ (ओडिशा)

सम्पादिका - मिनति रथ




भाषयन्ती विभाध्यक्षा प्रो.मिनतिरथः



प्रदीपप्रज्वलयन्ती विभागाध्यक्षा




पुराणज्योत्स्ना उन्मोचनं कुर्वन्तः अतिथयः



विभागीयच्छात्राणां एककचित्रम्



विदायसम्वर्द्धनावसरे छात्राः अध्यापकाश्च



शैक्षिकभ्रमणावसरे छात्राः

# PURANJYOTSNA

## *(Nabakalebara Special Issue)*

## *Vyasapeetha Samiti*

## Department of Puranetihasa



*Edited by :*

*Prof. Minati Rath*





**RASHTRIYA SANSKRIT SANSTHAN**
**Deemed University, New Delhi**
**Sadashiv Parisar, Puri**



जगन्नाथस्वामि नयनपथगामि भवतु मे

# पुराणज्योत्स्ना

(नवकलेवरस्वतन्त्रसंख्या)

**संरक्षकसम्पादकः**

**प्रो. जी. गङ्गन्ना**

**सम्पादिका**

**प्रो. श्रीमती मिनतिरथः**

आचार्या, विभागाध्यक्षा च

**सहसम्पादकः**

**डॉ. कृष्णचन्द्रकविः**

**अंशकालीन-अध्यापकः**

सहायकसम्पादकमण्डलम्

डॉ.मखलेशकुमारः (प्राध्यापकः)

कुमारी ज्योतिर्मयी साहुः (शोधछात्रा)

श्रीवापिसाहुः (शोधछात्रः)

कुमारी रूपश्री वेहेरा (आचार्यद्वितीयवर्षीया)

श्रीस कुमार अगस्ती (आचार्यद्वितीयवर्षीयः)

| | | |
|---|---|---|
| **पुराणज्योत्स्ना** | : | **ISSN 2394-9732** |
| **नवकलेवरस्वतन्त्रसंख्या** | | |
| **२०१५-१६** | | |
| **सम्पादिका** | : | **प्रो. श्रीमती मिनतिरथः**<br>आचार्या, विभागाध्यक्षा च |
| **सङ्गणकसहायकः** | : | **श्री. मानसकुमारनायकः** |
| **मुद्रणम्** | : | एच्.पि.कम्पूटर्स्<br>क्लार्क रोड्, पुरी |
| **प्रतयः** | : | ३०० |
| **मूल्यम्ः** | : | २००/- |

**PURANAJYOTSNA** (Nabakalebar Special Issue)

2015-16

| | | |
|---|---|---|
| Edited by | : | **Prof. Minati Rath**<br>H.O.D, (P.I) |
| Computerised by | : | **Manas Kumar Nayak** |
| Prited at | : | H.P. Computer, Clerk Road, Puri |
| Copies | : | 300 |
| Price | : | 200/- |

प्रो. पी.एन्. शास्त्री
कुलपति
राष्ट्रिय संस्कृत संस्थान
मानित विश्वविद्यालय
(मानव संसाधन विकास मन्त्रालय, भारत सरकार के अधीन)
('ए' ग्रेड के साथ राष्ट्रीय मूल्यांकन एवं
प्रत्यायन परिषद् द्वारा मान्यता प्राप्त)




Prof. P.N. Shastry
Vice-Chancellor
RASHTRIYA SANSKRIT SANSTHAN
Deemed to be University
(Under MHRD, Govt. of India)
(Accredited by NAAC with 'A' Grade)

Rsks/vc/msg/2015-16/227 Date 15.12.2015



## शुभांशसा

**व्येति संसारदु:खानि ददाति परमं सुखम् ।**
**तस्माद्दारुमयं ब्रह्म वेदान्तेषूपगीयते ।।**

राष्ट्रियसंस्कृतसंस्थानस्य मानितविश्वविद्यालयान्तर्गतस्य श्रीसदाशिवपरिसरस्य पुराणेतिहासविभागपक्षत: मुखपत्रिकाया: पुराणज्योत्स्नाया: नवकलेवरविशेषाङ्क: "प्रकाश्यते इति मोमुद्यते मे चेत:। वेदानामुपबृंहणत्वात् सदाचारविचाराणां परिप्रकाशकत्वात् च अद्यतनसमाजे पुराणसाहित्याध्ययनस्य महती आवश्यकतानुभूयते। समग्रपुराणसाहित्ये भगवता व्यासेन भगवतो श्रीजगन्नाथस्य सम्पूर्णस्वरूपं तत्त्वं च प्रदत्तम्। तेषां तत्त्वानां प्रचारप्रसाराय निबन्धा: भवन्ति उत्तमसाधनानि। एते निबन्धा: पत्रपत्रिकादिभ्य: आत्मप्रकाशं लभन्ते। एषा पत्रिका विभागस्य परिसरस्य च प्रतिष्ठां द्रढयतु। स्वीयं महिमानं दिक्षु प्रसारयतु। पुराणविभागाध्यक्षाम् अन्यान् अध्यापकान् छात्रान् चास्मिन् सन्दर्भे भृशमभिनन्दामि। सर्वेषां मङ्गलार्थं श्रीजगन्नाथं प्रार्थये।

प.ना.शास्त्री
(प्रो.पी.एन्.शास्त्री)

56-57, Institutional Area, Janakpuri, New Delhi-110058 Ph.: (O) 28523949 (Fax) 28521948
EPABX : 28524993, 28521994, 28524995 E.Mail : rskspvc@yahoo.com

**डॉ. जि. गङ्गन्ना**
प्राचार्यः
राष्ट्रियसंस्कृतसंस्थानम् (मानितविश्वविद्यालयः)
(भारतशासनस्य मानवसंसाधनविकासमन्त्रालयाधीनः)
श्रीसदाशिवपरिसरः, पुरी-७५२००१ (ओड़िशा)
तार : विद्यापीठम्
दूरभाष : ०६७५२-२२३४३९
फाक्स : ०६७५२-२२३४३९




**Dr. G. Ganganna**
Principal
RASHTRIYA SANSKRIT SANSTHAN (DEEMED UNIVERSITY)
(Under Ministry of Human Resources Development, Govt. of India)
Shree Sadashiva Campus, Puri-752001 (Odisha)
Gram : Vidyapitham
Phone : 06752-223439
Fax : 06752-223439

---



# शुभाभिनन्दनानि

राष्ट्रियसंस्कृतसंस्थानस्य मानितविश्वविद्यालयप्रान्तार्गतस्य श्रीसदाशिवपरिसरस्य पुराणेतिहासविभागपक्षतः पत्रिका **''पुराणज्योत्स्ना नवकलेवरस्वतन्त्रसंख्या''** प्रकाश्यते इति मनसि महान् सन्तोषः चेतः। अद्यतनसमाजे पुराणशास्त्रस्यास्ति महती आवश्यकता। जगन्नाथतत्त्वमाधारीकृत्य प्रकाशोन्मुखी इयं पत्रिका छात्राणाम् अध्यापकानाञ्च प्रतिभां प्रदर्शयतीत्यत्र नास्ति संशीतिः। एषा पत्रिका विभागस्य परिसरस्य च प्रतिष्ठां द्रढयतु स्वीयां महिमानं दिक्षु प्रसारयतु।

पुराणविभागाध्यक्षाः अन्यान् अध्यापकान् छात्रान् चास्मिन् सन्दर्भे भृशमभिनन्दामि। विभागोऽयं वर्धताम्, वर्धन्तां सर्वेऽपि विभागीयसदस्याः। श्रीजगन्नाथः सर्वान् सामाजिकान् अनया पत्रिकया मङ्गलानि वितनोत्विति।

जी. गङ्गन्ना
**(डॉ. जी. गङ्गन्ना)**
प्राचार्यः
राष्ट्रियसंस्कृतसंस्थानम्(मानितविश्वविद्यालयः),
श्रीसदाशिवपरिसरः, पुरी (ओडिशा)

# स्मृतारूढाः





विभागप्रतिष्ठातारः
स्वर्गताः पण्डित - श्रीसोमनाथदाशशर्माणः



आचार्याः रामतीर्थमिश्रशर्माणः



स्वर्गताः प्रो. फकीरमोहनपण्डामहोदयाः





प्रो. श्रीमती मिनतिरथ
विभागमुख्या



डॉ. राधामणि प्रतिहारी
सहाचार्या





डॉ. मखलेशकुमारः
सहाचार्यः




डॉ. कृष्णचन्द्रकविः
संविदाऽध्यापकः



॥ ॐ नमो भगवते वासुदेवाय ॥

## सम्पादकीयम्......



नीलाद्रिनाथं जगतामधीशं चिदंशरूपं शरणैकनाथम्।
श्रीनीलगोत्राधिपतिं वरेण्यं सुरेन्द्रवन्द्यं प्रणोतोऽस्मि नित्यम्।।

श्रीनीलाचलनाथ: जगन्नाथ: साक्षात् परंब्रह्म पुरुषोत्तम: एव । दारुब्रह्मस्वरूपेण स एव परमेश्वर: उत्कलदेशे पुरुषोत्तमक्षेत्रे विराजते । तस्य माहात्म्यप्रतिष्ठा मानवधारणाया: गवेषणायाश्च सुदुरातीतास्ति। श्रीजगन्नाथस्य ऐतिह-स्वरूपाकारादिविषये ज्ञातुं भारतीया: वैदेशिका: धार्मिकाश्च जना: समाकर्षिता: भवन्ति। तस्य पुरुषोत्तमधाम्न: महिमापि अवर्णनीयोऽस्ति। पुण्यभूमौ अस्मिन् भारतवर्षे यद्यपि परमपवित्राणि अपरिमितानि सन्ति तीर्थक्षेत्राणि ,तेषु चत्वारि सन्ति श्रेष्ठतमानि यानि भगवत: धामानि इत्यभिधीयन्ते। उत्तरस्यां दिशि हिमालयपाददेशे स्थितं वदरीनारायणधाम,दक्षिणस्यां दिशि सुप्रसिद्धं रामेश्वरधाम, पश्चिमस्यां दिशि द्वारकाधाम, पूर्वस्यां दिशि महोदधितीरे पुण्ये श्रीपुरुषोत्तमक्षेत्रे विश्वप्रसिद्धं श्रीजगन्नाथधाम । एषु चतुर्षु धामसु भगवत: श्रीजगन्नाथस्य धाम्न: श्रीपुरुषोत्तमक्षेत्रस्य माहात्म्यमवर्णनीयमस्ति। पुरुषोत्तमक्षेत्रे नीलकन्दरे साक्षात् श्रीपुरुषोत्तम: दारुब्रह्मस्वरूपेण विद्यमान: ।

मनोभीष्टदस्य सप्तस्वरूपात्मकस्य श्रीजगन्नाथस्य कृपाप्राप्तये श्रीपुरुषोत्तमक्षेत्रं प्रति नानक-आचार्यशङ्कर-चैतन्य-रामानुजादय: सिद्धमहापुरुषा: समाजग्मु:। इदानीमपि श्रीजगन्नाथस्य आशिषलाभाय प्रतिदिनं औड्रा: वङ्गनिवासिन: मैथिलजना: तैलङ्गिका: कश्मीरा: मागधा: अन्ये च सहस्रश: भक्ता: श्रीपुरुषोत्तमक्षेत्रं प्रति समागच्छन्ति । समुद्रस्नानेनापूर्वमानन्दमनुभूय श्रीजगन्नाथस्य दर्शनेन ते चात्मिकं शान्तिं लभन्ते। इत्थं भक्तजनेभ्योऽभयप्रद: श्रीजगन्नाथ: सर्वेषां सांसारिकजनानां कृते ऐहिकं पारलौकिकंञ्च सुखं प्रददाति। वस्तुत: एष जगन्नाथ: दारुमयशरीरं धृत्वा मानुषलीलां कुरुते । अत: यदा तस्य दारुशरीरं जराजीर्णं भवति तदा सोऽपि नूतनं शरीरं धत्ते । पुरातनं शरीरं विहाय नूतनशरीरधारणमेव **'नवकलेवर'** इत्युच्यते।

यद्यपि प्राचीनेषु पुराणादिशास्त्रेषु नवकलेवरस्योल्लेखो नास्ति तथापि परवर्त्तीकालरचितग्रन्थेषु नवकलेवरस्य प्रतिपादनं दरीदृश्यते। भगवत: श्रीजगन्नाथस्य नवकलेवरदर्शनार्थं भारतभूमौ भारतात् बहि: च स्थिता: भक्ता: उत्फुल्लिता: उत्कण्ठिताश्च जायन्ते। श्रीक्षेत्रं प्रफुल्लितं सुसज्जितञ्च भवति। किञ्च समग्रं जगत् जगन्नाथमयं जायते। ख्रीष्टीये २०१५ तमे वर्षे पुरुषोत्तमक्षेत्रे भगवत: श्रीजगन्नाथस्य नवकलेवर: गुण्डिचामहोत्सवश्चानुष्ठित: महासमारोहेण । श्रीजगन्नाथ: वस्तुत: पुराणप्रतिपादित: ब्रह्मविग्रहोऽस्ति। अत: पुण्यतमेऽस्मिन्नवकलेवराब्दे जगन्नाथचेतनाया: परिप्रकाशार्थं पौराणिकानां किमपि दायित्वं वर्तते इति मनसि निधाय पुराणविभागस्य व्यासपीठसमितिपक्षत: प्रकाशिताया: पुराणज्योत्स्नापत्रिकाया: नवकलेवरविशेषाङ्कप्रकाशने प्रवृत्ता: वयम्। श्रीजगन्नाथतत्त्वसम्बलितै: विषयै: सह जगन्नाथस्वरूपभूतानां श्रीकृष्णादीनां भगवदवताराणां नाम-रूप-लीलानुवर्णनमपि अत्र समुपस्थाप्यन्ते छात्रै:अध्यापकैश्च। पुण्यकार्येऽस्मिन् शुभाशंसाभि: सहयोगं दत्तवद्भ्य: विद्वत्प्रवरेभ्य: महानुभावेभ्य: कुलपतिभ्य: तथा अध्यक्षेभ्य: तथा शोधलेखैश्च सहयोगं दत्तवद्भ्य: महानुभावेभ्य: विभागपक्षत: विनम्रं कार्त्तज्ञं व्याहरामि। लेखने प्रकाशने च मानवसुलभां मुद्रणादिसमुद्भवाञ्च त्रुटिं क्षन्तुं सहृदयेभ्य: पाठकेभ्य: पाठिकाभ्यश्च आन्तरिक कार्त्तज्ञं विनिवेद्य पत्रिकाया: निर्विघ्नप्रकाशनार्थं पार्वतीपरमेश्वरयो: चरणकमलेषु शरणं गच्छामि। इति शम्।

सम्पादिका

*श्रीमती मिनतिरथ:*

# सूचीपत्रम्

***



# श्रीजगन्नाथदेवस्य सप्तावरणविधानम्

*प्रो. अतुलकुमारनन्दः*



विदितमस्ति तत्र भवतां समेषामिह खलु जगति यस्तावत् जन्म ग्रहणं करोति तस्य नूनमेव देहावसानं भवति इति न कश्चित् सन्देहस्य लेशावसर: **''जातस्य हि ध्रुवो मृत्युः''** इत्यपि न्याय: सर्वत्र संगच्छते। यदा भगवान् धरातले लीलां प्रकटयति लीलावसाने तस्यापि देहावसानं घटपरिवर्त्तनं वा भवतीति नैवाश्चर्यम्। इयं परम्परा अस्माकं श्रीक्षेत्रे श्रीजगन्नाथधाम्नि श्रीपुरुषोत्तमस्य परंब्रह्मण: श्रीजगन्नाथस्य संस्कृतावपि प्राप्यते। यदा आषाढ़मास: मलमासत्वेन समायाति तदा भगवत: श्रीजगन्नाथादिचतुर्धाविग्रहस्य नवकलेवर: भवतीति सर्वत्र सुविज्ञातम्। विशेषत: चैत्रशुक्लनवमीतिथे: नवकलेवरस्य विधानं प्रारब्धं भवति। विग्रहनिर्माणनिमित्तं चतूर्णां दारूणां संग्रहार्थं दइतापतिसेवका: निर्गच्छन्ति। सावित्री अमावास्यामध्ये दारुसंग्रहं कृत्वा श्रीमन्दिरस्य उत्तरद्वारसविधे वैकुण्ठपुर्यां विग्रहाणां निर्माणकार्यंनिमित्तं दारुणां संस्थापनं भवति। कारुका: शिल्पिन: यथा विधि: विग्रहनिर्माणं कुर्वन्ति। पुरोहिता: हवनन्यासादिपूर्वकं दारूणां निर्माणविधौ सहायं कुर्वन्ति। अत्र विग्रहनिर्माणनिमित्तं केवलं शङ्खचक्रगदापद्मादिचिह्नितानां श्मशानादिस्थानेषु जातानां नीम्ववृक्षाणामेव विग्रहनिर्माणार्थं संग्रहो भवति। विग्रहनिर्माणानन्तरं न्यासस्य दारुखण्डस्य विग्रहे ब्रह्मकपाटिरूपेण संयोजनं भवति। ब्रह्मपूजनं नैवेद्यप्रदानं दइतापतिसेवकानामुपस्थितौ पतिमहापात्रा: ब्राह्मणा: कुर्वन्ति।

तदनन्तरकाले कार्यक्रमो भवति श्रीविग्रहाणां सप्तावरणनीति: यथा मनुष्यस्यशरीरे अस्थिमज्जामांसरुधिरचर्मशुक्रशिराप्रशिरादय: भवन्ति तथैव दारवविग्रहेषु पूर्वोक्तानां शारीरिकास्थिप्रभृतीनां संस्थापनं भवति। तत्रादौ दारु द्वितीयं चन्दनं तृतीयं सुगन्धितैलं तत: दशमूलौषधि: पट्टवस्त्राणि तत: तण्डुलपिष्टं सर्वान्ते पट्टवस्त्ररज्जुभि: समग्रस्यास्य विग्रहस्यावरणीकरणम् एतानि द्रव्याणि महत्तमानि भवन्ति । कस्तुरीगुग्गुलादिप्रलेपनद्वारा विग्रहस्य स्थायित्वं परिकल्प्यते। एतदनन्तरं दत्तमहापात्रनामकसेवकसंप्रदाय: श्रीविग्रहाणां वर्णं करोति। इयं नीति: भाषायां वनकलागी इति उच्यते। विग्रहाणां वर्णकरणे यदेव कृष्णहरितश्वेतरक्ताणां वर्णानां प्रयोगो भवति तानि सर्वाणि द्रव्याणि प्राकृतिकपद्धत्यादत्तमहापात्रै: संगृह्यन्ते।

नवकलेवरविधानमत्यन्तगोपनीयं विद्यते। सर्वा: अपि नीतय: परम्परामाश्रित्य श्रीमन्दिरे प्रचलिता: भवन्ति। विषयेऽस्मिन् स्कन्दमहापुराणम् (उत्कलखण्ड:)वामदेवसंहिता, श्रीसंहिताप्रभृतीनां ग्रन्थानामाधारेण सेवका: सेवां कुर्वन्ति। विशेषत: श्रीमन्दिरस्य सत्त्वलिपिमाधारीकृत्य षड् त्रिंशत्प्रकारा:

सेवकाः श्रीजगन्नाथादिचतुर्द्धामुर्त्तीनां सेवाप्रदाने संलग्नाः सन्ति। एतेषु सेवकेषु आद्यसेवकः श्री श्री गजपतिगौडेश्वर- नवकोटिकर्णाटोत्कलवर्गेश्वर-वीराधिवीरवर-प्रबलप्रतापि-दिव्यसिंहदेवमहाराजः। तस्य आदेशानुसारं संकल्पवाक्यैः गुवाकवस्त्राङ्गुरीयकदक्षिणादिभिः वृतः राजगुरुः आचार्यभुत्वा नवकलेवरस्य सर्वं कर्म करोति। अत्र वैशिष्ट्यं यदेतद् वर्त्तते विग्रहनिर्माणनिमित्तं नीम्ववृक्षाः एव भवन्ति येन नीम्ववृक्षेण निर्मितविग्रहचतुर्णावर्णानां पूजनयोग्यः अभीष्टदायकश्च भवति। अस्यैव विग्रहस्याभ्यन्तरे स्थितस्य ब्रह्मणः परिवर्त्तनमेव घटपरिवर्त्तनमिति विचार्यते अर्थात् प्राचीनविग्रहात् नूतनविग्रहमध्ये ब्रह्मपदार्थस्य संस्थापनं घटपरिवर्त्तनमिति ज्ञायते। उत्सवोऽयं ज्योतिषशास्त्रप्रदर्शितेन कालेन कदाचित् एकोनविंशतिवर्षाणि कदाचित् नववर्षाणि मध्ये वा आपतति। अतः यस्मिन् सम्वत्सरे आषाढ़ः मलिम्लुचो भवति तदा अयमुत्सवो समनुष्ठीयते। इति दिक्

***

*धर्मशास्त्रविभागाध्यक्षः*
*राष्ट्रियसंस्कृतसंस्थानम्(मानितविश्वविद्यालयः)*
*श्रीसदाशिवपरिसरः पुरी, उत्कलाः*





# श्रीपुरुषोत्तमक्षेत्रमहत्त्वम्

*प्रो. खगेश्वरमिश्रः*

'भारतस्य प्रतिष्ठे द्वे संस्कृतं संस्कृतिस्तथा' इत्युक्त्यनुसारं ज्ञायते यद् भारतीयासंस्कृतिरतीव प्राचीना महनीया च। जगन्नाथसंस्कृतिरपि भारतीयप्राचीनसंस्कृतेरङ्गभूता। श्रीजगन्नाथसंस्कृतिः वैदिककालादारभ्यैवोज्जीवितास्ति। यस्याः संस्कृतेर्मूलाधारो भवति भगवान् श्रीजगन्नाथः। श्रीपुरुषोत्तमधामनि दारुव्याजशरीरेणैव पूर्णानन्दमयब्रह्मणः भगवतः श्रीजगन्नाथस्यावस्थितिः। भगवद्दर्शनप्रस्तावे यथा पद्मपुराणे[1] –

समुद्रस्योत्तरे तीरे आस्ते श्रीपुरुषोत्तमे।
पूर्णानन्दमयं ब्रह्म दारुव्याजशरीरभृत्॥

एतन्नाम्नाऽपि उत्कलप्रदेशस्य प्रचारः प्रसारश्च समग्रेऽस्मिन् आर्यावर्ते तस्माद्वहिरपि बहुशो दृश्यते। यथा शक्तिसङ्गमनतन्त्रे[2] – 'जगन्नाथप्रान्तदेशश्चोत्कलः परिकीर्त्तितः' इति। समग्रस्य विश्वस्य जगतः नाथः प्रभुः यस्मात् स जगन्नाथ इति नाम्ना व्यपदिश्यते। एतस्मादेव कारणात् न केवलं भारतवर्षेऽपि तु समग्रेऽस्मिन् विश्वे पवित्रतमोत्कलप्रान्तस्य महत्त्वमस्ति। यथा कपिलसंहितायाम्[3] –

'वर्षाणां भारतः श्रेष्ठो देशनामुत्कलः स्मृतः।
उत्कलस्य समो देशो देशो नास्ति महीतले॥'

अस्मिन्नेवोत्कलप्रान्ते पवित्रतमपुरुषोत्तमक्षेत्रस्यावस्थितिः। पुरुषोत्तमक्षेत्रमिदं सर्वापेक्षया प्रधानं सर्वोत्तमञ्च। एतादृशं पुण्यक्षेत्रं सर्वथा विरलमेव। यथा पुराणेषु –

वाराणस्याः सममस्ति क्षेत्रमेकाम्रकाननम्।
पुरुषाख्यसमं क्षेत्रं नास्ति त्रैलोक्यमण्डले॥

अत्रैव दारुविग्रहरूपेण भगवतः पुरुषोत्तमस्य श्रीजगन्नाथस्यावस्थितिः। यथा ब्रह्मयामले –

राजन्नवेहि रूपं मे नामजातिविवर्जितम्।
केवलानुभवानन्दं प्रवदन्ति मनीषिणः॥
स आस्ते श्रीनीलगिरौ जगन्नाथाख्यसंज्ञया॥

वायुपुराणेऽपि[4] –

भारते चोत्कले देशे क्षेत्रे श्रीपुरुषोत्तमे।
नीलाख्यो माधवो यो हि आस्ते दारवदेहभृत्॥

पवित्रतमे उत्कलदेशे द्वयोर्मन्दिरयोः ख्यातिर्दृश्यते। प्रथमं श्रीक्षेत्रस्थं भगवतः श्रीजगन्नाथस्य

श्रीमन्दिरं, द्वितीयन्तु एकाम्रक्षेत्रस्थं भगवतः श्रीलिङ्गराजस्य मन्दिरम्। समग्रेऽस्मिन् विश्वे यद्यपि द्वयोर्ख्यातिरविस्मरणीया तथापि पुरुषोत्तमक्षेत्रस्य श्रीजगन्नाथमन्दिरं तत्रान्यतमं स्थानं भजते। श्रीजगन्नाथस्य प्राचीनं नाम श्रीपुरुषोत्तमः। ऐतिहासिकानुसन्धानाद् विज्ञायते यत् श्रीजगन्नाथमन्दिरस्य निर्माता गङ्गवंशीयमहाराजा अनन्तवर्मचोडगङ्गदेवः। अस्य पुरुषोत्तमधाम्नः प्रसिद्धिः ख्रीष्टीयाष्टम-नवमशतकयोरासीदिति मुरारेरनर्घराघवनाटकात् ज्ञायते। यतो हि समुद्रतीरे[६] श्रीपुरुषोत्तमदेवस्य प्रतिष्ठाऽभूदिति तेन तत्र प्रत्यपादि। श्रीकृष्णमिश्रकृतप्रबोधचन्द्रोदयनाटकेऽपि श्रीपुरुषोत्तमक्षेत्रविषये चर्च्चा दृश्यते। तस्य नाटकस्य समयस्तु १०७८ ख्रीष्टाब्दः। गङ्गवंशीयराजानन्तवर्मचोडगङ्गदेवः सोमवंशीयराजाकर्णकेशरीं पराजित्य ख्रीष्टीयद्वादशशतकस्य प्रथमभागे कलिङ्गोत्कलयोरेकीकरणं कृत्वा तत्र शासनकार्यं प्रचालितम् । तदानीन्तनसमये तस्य निर्देशेन पुर्यां श्रीजगन्नाथमन्दिरं निर्मितमभूदिति तत्परवर्तिगङ्गवंशीयराज्ञामभिलेखेषु प्राप्यते । यथा –

पादौ यस्य धरान्तरीक्षमखिलं नाभिश्च सर्वादिशः
श्रोत्रे नेत्रयुगं रवीन्दुयुगलं मूर्धापि च द्यौरसौ ।
प्रासादं पुरुषोत्तमस्य नृपतेः को नाम कर्तुं क्षमः
तस्येत्याद्यनृपैरुपेक्षितमयं चक्रेथ गङ्गेश्वरः ।।[७]

किम्बदन्त्या स्पष्टं भवति यदतिप्राचीनकाले तत्र शबराः भगवन्तं श्रीजगन्नाथं नीलमाधवरूपेण पूजयन्ति स्म । परन्तु परवर्तिकाले यदा ब्राह्मण्यधर्मस्याभ्युत्थानमभुत्तदा दारुविग्रहरूपेण भगवतः श्रीजगन्नाथस्य पूजा प्रवर्तिता, ततः प्रभृतिः श्रीक्षेत्रं श्रीजगन्नाथधाम इति नाम्नाऽपि प्रथितमभूत्। क्षेत्रमिदं शङ्खक्षेत्रनाम्नाऽपि प्रसिद्धम्। यतो हि शङ्खाकृतिरूपेणास्य क्षेत्रस्यावस्थितिः वर्त्तते। अपरञ्च भगवतः प्रमुखायुधरूपेण शङ्खस्य प्राधान्यात् तन्नामानुसारं क्षेत्रस्यापि नाम शङ्खक्षेत्रमभूत्। यद्भवतु नाम सर्वेष्वागमेषु तन्त्रेषु पुराणेषु अन्येषु शास्त्रेषु चास्य क्षेत्रस्य प्रसिद्धिः भगवतः श्रीजगन्नाथस्य महत्त्ववर्णनमवश्यमेव प्राप्यते । एवमेव प्रकारेण एकाधिकचतुर्दशशतशकाब्देषु १४७९ तमख्रीष्टाब्देषु गृहीतोत्कलदेशराज्यभारेण विहितकाञ्चीविजयेन श्रीमज्जगन्नाथैकशरणेन श्रीपुरुषोत्तमाभिधेन गजपतिना अष्टादशपुराणादिबहुतरग्रन्थेभ्यः प्रमाणवचनान्याकलय्य व्यरचि ग्रन्थो मुक्तिचिन्तामणिर्नाम । 'मुच्' धातोर्भावे 'क्तिन्' प्रत्यये कृते मुक्तिरिति सिद्ध्यति । मोचने, संसारबन्धनराहित्ये, ब्रह्मस्वरूपावाप्तौ च मुक्तिशब्दः प्रयुज्यते । मुक्तिर्नाम मोक्षः । 'मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतम्, मोक्षोऽपवर्गः' इति अमरसिंहः[८] । मोक्ष्यते दुःखमनेन इति मोक्षः । यथा सांख्यसारे[९]–

न मोक्षो नभसः पृष्ठे न पाताले न भूतले ।
सर्वाशासंक्षये चेतः क्षयो मोक्ष इति श्रुतेः ।।



आत्यन्तिकदुःखनिवृत्तिरिति नैयायिकाः । नित्यसुखावाप्तिरिति वेदान्तिनः। शरीरेन्द्रियाभ्याम् आत्मनो मुक्तत्वं मुक्तिरिति भरतः। मोक्षः, कैवल्यम्, निर्वाणम्, श्रेयः, निःश्रेयसम्, अमृतम्, अपवर्गः, अपुनर्भवः, स्थिरः, अक्षरञ्चेति मुक्तेः पर्यायाः । मुक्तिविषये यथा ब्रह्मवैवर्त्तपुराणे[१०] –

मुक्तिस्तु त्रिविधा साध्वि श्रुत्युक्ता सर्वसम्मता ।
निर्वाणपददात्री च हरिभक्तिप्रदा नृणाम् ।।
हरिभक्तिस्वरूपां च मुक्तिं वाञ्छन्ति वैष्णवाः ।
अन्ये निर्वाणरूपाञ्च मुक्तिमिच्छन्ति साधवः ।।

मुक्तये चिन्तामणिः मुक्तिचिन्तामणिरिति चतुर्थीतत्पुरुषसमासाश्रेयण सर्वकामप्रदे परमेश्वरे च चिन्तामणिशब्दप्रयोगः । यथा –

आयुरारोग्यमर्थञ्च भागांश्चैवानुषङ्गिकान् ।
ददाति ध्यायतां नित्यं सर्वकामप्रदो हरिः ।।

इत्युक्तेस्तस्य तथात्त्वम् । चिन्तया ध्यानधारणादिना मन्यते आहूयते इति चिन्तामणिः । 'चिन्तामणिः पद्मपाणिः' रित्यादिद्वाविंशतिबुद्धविशेषस्येति त्रिकाण्डशेषे[११] । श्रीपुरुषोत्तमक्षेत्रमाहात्म्यविषये प्रामाणिको भवति श्रीपुरुषोत्तमदेवसंगृहीतमुक्तिचिन्तामण्यभिधो ग्रन्थः। श्रीमज्जगन्नाथदेवस्यावलोकनेन तदन्ननिर्माल्याशनेन च कीदृक् फललाभो भवतीति प्रायशो बहवो न जानन्ति। अतः साधारणेभ्यो निर्वाचितविषयं विज्ञापयितुम् अत्र प्रयाशः ।

श्रीपुरुषोत्तमक्षेत्रं हि सकलहिन्दुसाम्प्रदायिकानां तीर्थस्थानम्। यावन्ति तीर्थानि भरतखण्डान्तःपातिनि, तन्मध्ये तत्क्षेत्रं सर्वोत्तमम् । सर्वापेक्षया प्रतिवत्सरं समधिकलोकानां समागमोऽत्र दृश्यते। तीर्थानुसरणस्य पुरुषार्थसाधनता सर्वथा अस्त्येव । यथा महाभारते[१२] –

तीर्थाभिगमनं पुण्यं यज्ञैरपि विशिष्यते ।
अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च ।।
अदत्त्वा काञ्चनं गाश्च दरिद्रो नाम जायते ।
अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा विपुलदक्षिणैः ।।
न तत्फलमवाप्नोति तीर्थाभिगमनेन यत् ।।

अग्निष्टोमादिभिरित्यनेन केषांचित्तीर्थानां यज्ञादधिकफलत्वं दर्शितमिति सामान्यतो यज्ञफलतुल्यफलतोक्ता न विरुध्यते । यथा –

यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ।
विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते ।।

परपीडाचौर्यादिनिवृत्त्या हस्तयोः संयमः, अगम्यदेशगमनपरताडनादिनिवृत्त्या पादयोः संयमः, कुत्सितसङ्कल्पादिनिवृत्त्या मनसः संयमः, विद्याऽत्र तत्तीर्थगुणगानम् । तपः, तीर्थोपवासादिः । कीर्तिः, सच्चारित्रत्वेन प्रसिद्धिः । यद्यपि कीर्त्तिशून्यस्य तीर्थफलाभाव इत्यसमञ्जसं, न वा प्रसिद्धिः कर्तुं शक्या कीर्त्यर्थं धर्मानुष्ठानानौचित्यात्। तथापि कीर्त्तिपदमधार्मिकत्वव्यतिरेकपरम् ।

तीर्थानां यागाद्यपेक्षयाऽतिशय उक्तः । न च जपोपवासादेरपि धननिरपेक्षतया कथमन्यापेक्षयाऽतिशयः तीर्थानामेवेति वाच्यम् । उपवासस्य कायक्लेशसाध्यतया ततोऽपि तीर्थस्यातिशयात् । उपवासासहिष्णूनां तत्र असामर्थ्याच्च । किञ्च –

संवत्सरशतं साग्रं निराहारस्य यत्फलम् ।
प्रयागे माघमासेऽस्य त्र्यहस्नातस्य तत्फलम् ।।[१४]

अतो बहुवित्तव्ययायासनिरपेक्षतया तीर्थसेवा धर्मान्तरेभ्यो विशिष्यते । यथा भारतेऽपि[१५] –

अज्ञानेनापि यस्येह तीर्थयात्रादिकं भवेत् ।
सर्वकामसमृद्धः स स्वर्गलोके महीयते ।।

एतद्बलात् फलकामनां विनापि काम्यफलनिर्वाहो गम्यते । कामनाकृतं त्वधिकफलं भवति अकामकृतात् कामकृते पुण्येऽपि आधिक्यस्मरणात्। अतः सर्वथा तीर्थानुसरणमेव श्रेयस्करम् । यथा वायुपुराणे[१६] –

तीर्थान्यनुसरन् धीरः श्रद्धधानः समाहितः।
कृतपापो विशुद्ध्येत किं पुनः शुद्धकर्मकृत् ।।
तीर्यग्योनिं न गच्छेच्च कुदेशे च न जायते ।
स्वर्गी भवति वै विप्रो मोक्षोपायञ्च विन्दति ।। इति ।

एतस्माद्विज्ञायते यत् तीर्थानामस्त्येव पुरुषार्थनिमित्तता। पुरुषार्थेषु च धर्मः प्रथमः।'प्राधान्यं च धर्ममूलत्वादितरेषाम्। न च वक्तव्यं धर्ममूलोऽर्थोऽर्थमूलो धर्मः। यतोऽर्थमन्तरेणापि जपस्तपस्तीर्थयात्रादिना धर्मनिष्पत्तिः, अर्थलेशोऽपि न धर्ममन्तरेणेति। एवं काममोक्षावपीति' आह विज्ञानयोगी[१७] ।

वस्तुतः श्रीपुरुषोत्तमक्षेत्रं श्रीपुरुषोत्तमश्च सर्वेषां जनानां मोक्षदत्वेन वर्त्तते। क्षेत्रदर्शननिर्माल्यभक्षणान्यन्तरङ्गभावेन मोक्षसाधनानि,तत्र तावत्तन्मोक्षस्य परम्परा साधनीभूतं क्षेत्रमिदम् । यथा तत्रैव –

विनाप्यष्टाङ्गयोगेन विनाप्यध्ययनानि च ।
मुक्तिचिन्तामणिस्त्वेष मोक्षदः सर्वदेहिनाम् ।।



युगेऽस्मिन् सर्वे कालकवलिताः। समयानुसारं सर्वेषां स्थितिः विलयश्च जायत एव। परन्तु अस्य क्षेत्रस्य माहात्म्यवर्णनावसरे स्वस्थितिप्रतिपादनावसरे च भगवता स्वयमेव प्रतिपादितं यत् –

उत्तमः पुरुषो यस्मात्तस्मात्सः पुरुषोत्तमः ।
दक्षिणस्योदधेस्तीरे न्यग्रोधो यत्र तिष्ठति ।।
विनाशं नैवमभ्येति तत्राहं स्वयमास्थितः ।
आदिकल्पे समुत्पन्ने महदुल्कानिवर्हणे ।।
अस्मिन् क्षेत्रे महाविष्णुर्न त्यजेत् क्वापि न व्रजेत् ।
तस्मात्सर्वप्रयत्नेन देहमात्रं परित्यजेत् ।।

इदं पुरुषोत्तमक्षेत्रं भूस्वर्गमिति कथ्यते सर्वापेक्षया गोपितं स्थानमिति प्रसिद्धिः वर्त्तते ।

भूस्वर्गमिति यं प्राहुर्मुनयः शास्त्रकोविदाः ।
पृथिव्यां गोपितं स्थानं नास्त्यन्यज्जगदीशितुः ।।

सर्वतीर्थेषु इदं पुरुषोत्तमक्षेत्रं प्रधानम् । अस्य क्षेत्रस्य सृष्टिर्नास्ति विलयोऽपि नास्ति । एतदर्थं क्षराक्षरमतिक्रम्यात्र श्रीपुरुषोत्तमस्यावस्थितिरिति तत्रैवोक्तम् –

सागरस्योत्तरतीरे महानद्यास्तु दक्षिणे ।
स प्रदेशो पृथिव्यां हि सर्वतीर्थवरप्रदः।।
क्षराक्षरमतिक्रम्य वर्त्तेऽहं पुरुषोत्तमे ।
सृष्ट्या लयेन नाक्रान्तं क्षेत्रं मे पुरुषोत्तमम् ।।

अत्र मार्कण्डेयपुष्करिणी,श्वेतगङ्गा, रोहिणीकुण्डं,महोदधिः,इन्द्रद्युम्नसरश्चास्ति, यत्र स्नात्वा मुक्तिर्लभ्यते, पुनश्चात्र जन्म नैव भवति। यथा –

मार्कण्डेयावटेऽकृष्णे रोहिण्याञ्च महोदधौ ।
इन्द्रद्युम्नसरः स्नात्वा पुनर्जन्म न लभ्यते ।।

विभिन्नासु अवस्थासु भगवतः श्रीजगन्नाथस्य दर्शनमतीव महत्त्वपूर्णम्। रथारूढं जगन्नाथं दृष्ट्वा पुनर्जन्म न लभ्यते इत्युक्तिरतीव प्रसिद्धा एव। यथा ब्रह्माण्डपुराणे –

दोलारूढं जगन्नाथं मञ्चस्थं च जनार्दनम् ।
रथस्थं वामनं दृष्ट्वा पुनर्जन्म न विद्यते ।।

अन्यक्षेत्रापेक्षया एतत् क्षेत्रस्यापरमपि महत्त्वमस्ति यदत्र यदा कदापि भगवन्तं द्रष्टुं शक्यते । एतदर्थं न कोऽपि कालनियमः अत्रास्ति। यथा –

पश्यतां मुक्तिदः साक्षात् सर्वधर्मवहिष्कृताम् ।
न कालनियमस्तत्र दर्शने तत्र भो द्विजाः ।।

महाप्रसादस्य माहात्म्यं सर्वोत्कृष्टम्। यस्य सेवनं भाग्यादेव सम्भवति। शुष्कं पर्युषितं वा भवतु तत्सेवनेन सर्वथा पापं नश्यतीत्यत्र नास्ति सन्देहलेशः। यथा –

कुक्कुरस्य मुखभ्रष्टं ममान्नं यदि जायते ।
ब्रह्माद्यैरपि तद्भक्ष्यं भाग्यतो यदि लभ्यते ।।
शुष्कं पर्युषितं वापि नीतम्बा दूरदेशतः ।
दुर्जनेनापि संस्पृष्टं सर्वथैवाघनाशनम् ।।

इदं पुरुषात्तमाभिधं तीर्थक्षेत्रमतीव मोक्षदायकम् । यथा –

अयोध्या मथुरा माया काशी काञ्ची ह्यवन्तिका
पुरी द्वारावती चैव सप्तैताः मोक्षदायकाः ।।
द्वारावत्यां जले मुक्तिः वाराणस्यां जले स्थले ।
जले स्थले चान्तरिक्षे मुक्तिः श्रीपुरुषोत्तमे ।। इति ।

लघुभागवतामृतेऽपि एतदर्थमुक्तमस्ति यत् –

सर्वेषामपि तीर्थानां क्षेत्राणां राजसत्तम ।
वेदागमपुराणेषु श्रेष्ठं श्रीपुरुषोत्तमम् ।। इति ।

१. मुक्तिचिन्तामणौ २. ध.श.को., पृ. १०८ ३. क.सं. १/८ ४. वा.पु. (उत्तर),
५. 'भो भो लवणोदवेलावनालीतमालतरुकन्दलस्य त्रिभुवनमौलिमण्डनमहानीलमणेः कमलाकुचकलसकेलिकस्तूरिकापत्राङ्कुरस्य भगवतः श्रीपुरुषोत्तमस्य यात्रायामुपस्थापनीयाः सभासदः' । (अ.रा.प्रथम. पृ. ४)
६. पुरुषः – 'अहमुत्कलदेशादागतोऽस्मि । अस्ति तत्र सागरतीरसन्निवेशे पुरुषोत्तमशब्दितं देवतायतनम्' । (प्र.च. द्वितीय. पृ. ८७)
७. श्री.श्री. पृ. १६ ८. अ.को. १/५/६ ९. सां.सा. २/७/२५
१०. ब्र.वै.पु. प्रकृति २९ ११. त्रि.शे. १/१६, पृ. ५ १२. वी.मि. तीर्थप्र., पृ. १२
१३. वी.मि. तीर्थप्र., पृ. १३ १४. वी.मि. तीर्थप्र., पृ. १६ १५. वी.मि. तीर्थप्र., पृ. १५
१६. वी.मि. तीर्थप्र., पृ. १४ १७. या.स्मृ. १/१, मिता. पृ. २ १८. मु.चि/ पृ. १८

***

*धर्मशास्त्रविभागः, श्रीसदाशिवपरिसरः, पुरी*



# वामदेवसंहिताग्रन्थे श्रीजगन्नाथोपासनाविमर्शः

***प्रो. श्रीमती मिनतिरथ***



श्रीवामदेवसंहिताग्रन्थः श्रीजगन्नाथदेवस्य तस्य धाम्नः पुरुषोत्तमक्षेत्रस्य तथा तस्य अत्याश्चर्यमयस्यालौकिकस्य मन्दिरस्य तत्त्वसम्बलितः महान् प्राचीनग्रन्थविशेषोऽस्ति । सरलसंस्कृतभाषया बोधगम्यशैल्या उत्कललिप्या लिखितोऽयं ग्रन्थः विविधरूपेण श्रीजगन्नाथदेवस्य तस्य ज्येष्ठभ्रातुः बलदेवस्य तथा योगमायायाः आदिशक्त्याः देवीसुभद्रायाः चरित्रं समुपस्थापयति। ग्रन्थेऽस्मिन् श्रीमन्दिरस्यान्तर्बहिभागयोः स्थितानां देवदेवीनां परिचयः जगन्नाथदेवस्य सप्तस्वरूपाणि श्रीमन्दिर-पूजक-सेवक-नियोगादीनां नियोजनम् पूजाविधयः रत्नभाण्डनिर्णयः, पूजापात्रलक्षणम्, भोगान्तरविवरणम्, जगन्नाथस्य स्थितिकालनिर्णयः, मन्दिरे उत्पातदर्शने शान्तिविधानम्, विविधाः यात्राः वार्षिकाः पर्वोत्सवादयश्च वर्णिताः सन्ति । द्वात्रिंशदध्यायसंयुतोऽयं ग्रन्थः जगन्नाथदेवस्य नीतिनिर्णयकोऽस्ति । विशेषतः जगन्नाथमन्दिरे नीतिनिर्द्धारणार्थं स्वतन्त्रनियमाभावात् ग्रन्थस्यास्य प्रामाण्यं श्रीमन्दिरे न्यायालये च स्वीकृतं भवतः। वामदेवसंहितायाः रचनाकालः षोडशशतकस्यान्तिमार्द्ध इति वक्तुं शक्यते। अस्य ग्रन्थस्य रचयितुः नाम न ज्ञायते । वस्तुतः भगवती पार्वतीदेवी तथा भगवान् वामदेवः शिवः इत्यनयोः प्रश्नोत्तरव्याजेन ग्रन्थस्यास्य वामदेवसंहितेति नाम चरितार्थतां याति।

**श्रीजगन्नाथोपासना परम्परा -**

वामदेवसंहिताग्रन्थे जगन्नाथस्य ऐतिह्यं सुरक्षितं वर्तते । ग्रन्थानुसारेण जगन्नाथधर्मे यद्यपि बहुसंस्कृतीनां समावेशः दृश्यते, तथापि मुख्यतः श्रीजगन्नाथः ब्राह्मण्यधर्मप्रतिपादितः श्रीपुरुषोत्तमवासुदेवविष्णुः । अतः संहितायां ब्राह्मण्यधर्मप्रतिपादितैः अन्यैः देवैः सह मुख्यतः पञ्चदेवोपासनापरम्परा अनुसृता विद्यते। तेषु पञ्चदेवेषु संहितायां पुरुषोत्तमवासुदेवविष्णूपासना प्राथम्यं भजते ।

**(१) विष्णूपासना -** वामदेवसंहितानुसारेण दिव्यचेतनायाः प्रतीकः श्रीजगन्नाथः निरञ्जनः ब्रह्म वासुदेवः चिदंशरूपश्च। वेदवेदान्तपुराणमतं स्वीकृत्य संहितायां सोऽपि परमेश्वरः जगतामधीशः सुरेन्द्रवन्द्यः विष्णुरूपः वर्णितः। सांसारिकाणां जनानां कल्याणार्थं मोक्षालाभाय च स विभुः कृपया उत्कले अवस्थितं क्षेत्रवरं मर्त्यवैकुण्ठम् आत्मनाम दत्तवान् येन क्षेत्रमिदं पुरुषोत्तमक्षेत्रमिति प्रसिद्धोऽभूत् । अस्मिन् क्षेत्रे च गुह्यतमो ब्रह्मपरमेश्वरः पुरुषोत्तमः विष्णुः नीलमाधवरूपेण आत्मप्रकाशं कृतवान्। ऋक्-यजु-अथर्वादिषु वेदेषु प्रतिपादितां पुरुषोत्तमचेतनां गृहीत्वा श्रीमद्भगवद्गीतायाः पुरुषोत्तमतत्त्वं स्वीकृत्य श्रीमद्भागवतादिषु

महापुराणेषु वर्णितं कृष्णवासुदेव-धर्ममवलम्ब्य संहितायां पुरुषोत्तमविष्णुः मुख्योपास्यदेवत्वेन कल्पितः। पुरुषोत्तमोपासनायाः क्षेत्रमिदं पुरुषोत्तममिति ख्यातम् । मात्रा लक्ष्म्या सह पूजितः स पुरुषोत्तमः माधवः नीलवर्णत्वात् नीलमाधवश्च कथितोऽभूत् । कालान्तरे नीलमाधवोपासना इन्द्रद्युम्नउपाख्यानमाध्यमेन जगन्नाथोपासनायां रूपान्तरिता जाता । श्रीमद्भागवतादिषु प्रतिपादितं विष्णु-वासुदेव-कृष्णयोरेकत्वम् अभिन्नत्वञ्च गृहीत्वा संहितायां जगन्नाथस्य ध्यानार्थं कृष्णरूपं निरूपितं वर्तते । तस्य जगत्पतेः पूजनं तु गोपालमन्त्रेण एव भवति । बलदेवस्य ध्यानार्थं कृष्णाग्रजातस्य संकर्षणबलरामस्य रूपं कल्पितमस्ति तथा च योगमायायाः सुभद्रायाः ध्यानं पूजनं तु भुवनेश्वरीरूपेण भूवनेश्वरीमन्त्रेण च भवतः। विष्णोः अंशावताररूपेण जगन्नाथे नृसिंह-वराह-पर्शुराम-वामन-राम-कृष्णादिकं तत्त्वञ्चारोपितं वर्तते। इत्थं श्रीवामदेवसंहितायां पुरुषोत्तम-वासुदेव-विष्णुः जगन्नाथरूपेण सर्वदेवमयत्वं भजते ।

**(२) शिवोपासना** - श्रीवामदेवसंहिताग्रन्थे जगन्नाथोपासनायां शिवोपासनायाः अन्तर्भावः दृश्यते। संहितायां शिवः भैरवाभिहितोऽस्ति । जगन्नाथस्य पूजने भैरवस्य विशेषमहत्त्वं संहितायां निरूपितं वर्तते । भैरवस्यानुज्ञां विना श्रीमन्दिरे जगन्नाथस्य पूजारम्भः न भवति । जगन्नाथदेवस्य पूजारम्भे पूजकः भैरवमित्थं स्तौति -

तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम ।
अनुज्ञां देहि मे नाथ विष्णुपूजां करोम्यहम् ॥
(वा. दे. सं., ७/८)

सत्य-शिव-सुन्दरस्वरूपिणः शिवस्य संहितायाम् एतादृशं वर्णनं तस्य परमेश्वरस्य महत्त्वापकर्षकः नास्ति। श्रीपुरुषोत्तमक्षेत्रस्य रक्षाकार्य-निर्वाहार्थं शिवः अंशेन क्षेत्रपालत्वं भजते इति तत्रैव प्रतिपादितम्। विष्णुशिवयोः मध्ये अभेदप्रदर्शनार्थं संहितायां लिखितं यत् विष्णुः अपि शिवक्षेत्रे एकाम्रके क्षेत्रपालत्वं स्वीकारोतीति। तथा च वृषभरूपेण विष्णुः शिवस्य तथाच शिवः खगरूपेण विष्णोः वाहकत्वं निर्वाहयतः । श्रीमन्दिरे शिवः भैरवरूपेण तथा च देवीविमला भैरवीरूपेण स्थितिं कुरुतः। उभयोः विष्णुशिवयोः साम्यं प्रदर्श्य संहिता एतदपि निरूपयति यत् यःतयोः मध्ये भेदबुद्धिं करोति तस्य महती दुर्गतिश्च भवति । इत्थं संहितायां शैव-वैष्णव-उपासनयोः सम्मिलितं स्वरूपं सम्मुखमायाति ।

**(३) शक्त्युपासना** - श्रीमवामदेवसंहितायां शक्त्युपासनायाः महती परंपरा समुपस्थापिताऽस्ति। प्रमुखशाक्तपीठ-विमलापीठस्य उत्पत्तिविषये संहितायामेकाख्यानं प्रस्तुतं विद्यते यत् पुरा शिवस्य पत्नी दक्षजा सती दक्षयज्ञे शिवनिन्दां निशम्य यज्ञाग्नौ देहत्यागं कृतवती । तद् विज्ञाय तत्रागत्य शिवः यज्ञं नाशयित्वा सत्याः शवमानीय कैलासगमनकाले शङ्खक्षेत्रे सत्याः कुणपः च्छिन्नोऽभूत। शङ्खस्यावरणे रोहिणीकुण्डपार्श्वे देव्याः नाभिमण्डलं निपतितं बभूव । एकपञ्चाशत्-शाक्तपीठेषु पुरुषोत्तमक्षेत्रस्थितं नाभिजातं



तत् शाक्तपीठं विमलाक्षेत्रमिति प्रसिद्धं बभूव । तत्र विभुनिर्माल्यं ध्यायन्ती विमला तिष्ठति । शक्तिउपासनायाः प्राधान्यात् प्रसङ्गान्तरे संहितायामपि प्रतिपादितस्य भैरवजगन्नाथस्य प्रसादं प्राथम्येन भैरव्यै विमलायै समर्प्यते । भैरव शिवस्य पत्नी विमला तत्र भैरवी रूपेणोपासिता । श्रीमन्दिरे सा चात्मानम् अष्टधा विभज्य तिष्ठति । ताः अष्टशक्तयः सर्वतोभावेन श्रीमन्दिरस्य श्रीक्षेत्रस्य च रक्षाविधानं कुर्वन्ति। आद्याशक्तियोगमाया भूवनेश्वरी देवी तत्रापि जगन्नाथस्य भगिनी सुभद्रा रूपेण प्रपूजिताऽस्ति । शाक्तोपासनायाः प्रभावात् जगन्नाथस्य पत्नी लक्ष्मीः संहितायां चण्डी निगदिता ।

**(४) सूर्योपासना** - वामदेवसंहितायां सूर्योपासनायाः परम्परा-प्रचलिताऽस्ति । भगवतः जगन्नाथस्य पूजनविधौ सूर्यदेवस्य पूजनम् अन्तर्भूतमस्ति । सूर्यस्य पूजनं विना विष्णोः पूजनं संहितायां निषिद्धमस्ति । तद्यथा -

सूर्यपूजां विना विष्णोः पूजां यो मूढधीश्चरेत् ।
सा पूजा राक्षस्यैर्गाह्या प्रीतेर्नस्याज्जनार्दनः ॥
(वा. दे. सं. ६/४२)

वामदेवसंहितायां सप्तमाध्याये सूर्योपासनायाः विस्तृतं प्रतिपादनं समुपस्थापितं विद्यते । तत्र सौरमतस्य प्रतिपादनं सूर्योपासनायाः प्राचीनां पद्धतिं सूचयति । सूर्यस्य कृते चण्डनैवेद्यप्रदान-परम्परया संहितायां सूर्यस्य महत्त्वं सम्मुखमायाति । संहितायां सूर्येण साकं विष्णोः अभेदप्रदर्शनेन विष्णु-सूर्ययोः उपासनायाः समन्वयः प्रमाणितो भवति ।

**(५) गणपत्युपासना** - जगन्नाथस्योपासनायां गणपत्युपासनायाः परम्पराऽपि अन्तर्भूताऽस्ति। जगन्नाथस्य पाकशालानिर्माणकाले गणेशपूजनस्य विधानं संहितायां निरूपितं विद्यते। सर्वकार्य-सिद्ध्यर्थञ्च गजाननस्य पूजनं तत्र निर्दिष्टं वर्तते । विष्णोः नैवेद्यस्य पार्श्वके च गणेशस्य कृते चण्डनैवेद्यस्य व्यवस्था तत्र विहिता विद्यते ।

श्रीवामदेवसंहितायां पञ्चदेवोपासनायां निर्गुणब्रह्मणः सगुणोपासनापरम्परा परिलक्ष्यते। तत्र विष्णूपासनायां भगवतश्चिद्भावस्य शिवोपासनायां सद्भावस्य देव्युपासनायां शक्तिभावस्य गणपत्युपासनायां ज्ञानमयभावस्य सूर्योपासनायां स्वाकर्षणरूपतेजोभावस्य प्रकाशः प्रतिपादितो विद्यते । यद्यपि सगुण-ब्रह्मोपासनाप्रकाराः पुराणेषु पार्थक्येन वर्णिताः उपलभ्यन्ते वामदेवसंहितायां ते उपासनाप्रकाराः जगन्नाथोपासनायाम् अन्तर्भूताः सन्ति येन जगन्नाथदेवस्य सर्वदेवमयत्वं सर्वरूपधरत्वञ्च सिद्धं भवति।

यद्यपि नीलाद्रिमहोदयग्रन्थे जगन्नाथस्य माहात्म्यं तथा तस्य मन्दिरविषयकं तत्त्वं सन्निहितं विद्यते तथापि जगन्नाथतत्त्वनिरूपणे वामदेवसंहितायाः महत्त्वं प्रणिधानयोग्यम् । वामदेवसंहितायां जगन्नाथस्य सम्पूर्णं महत्वं सुष्ठुतया निरूपितं वर्तते । नास्ति एतादृशः कश्चिदन्यः ग्रन्थः यस्मिन् श्रीमन्दिरे विधीयमानानां

नियमानाम् एतादृशोल्लेखः स्यात् । वैषयिकाध्यात्मिक-तत्त्वपूर्णेऽस्मिन् ग्रन्थे श्रीजगन्नाथस्य श्रीमन्दिरस्य च परम्परायाः प्रभूता चर्चा विद्यते । जगन्नाथधर्मस्यैतिह्यस्य च प्रचारप्रसाराय प्रस्तुतमिदं ग्रन्थरत्नं समेषां धार्मिकजनानां भक्तानां गवेषकाणां कृते नितरामुपयोगिनी अस्ति । इति शम् ।

जयतु भारतं जयतु संस्कृतं जयजगन्नाथः ।

**सहायकग्रन्थाः**


१. मन्दिरेरकथा - गुरुदाससरकार ।

२. Vaishnavism in Orissa,

३. इन्द्रद्युम्नकिम्बदन्तीर ऐतिहासिकता भञ्जप्रदीप, आश्विन, १३४२ साल ।

४. ओडिशा साहित्यर इतिहास - प्रथमभाग ।

५. History of Orissa.

६. Hints on the Significance and History of Jagannath.

७. Orissa and her Remains.

८. दारुदेवता ।

९. Cult of Jagannath.

१०. जगन्नाथचेतनार उद्भव ओ विकाश, डॉ. वासुदेवसाहु ।


***





# श्रीजगन्नाथषोडशीकाव्ये विश्वशान्तिसन्देशः

*प्रो. सुकान्तकुमारसेनापतिः*

**नीलाचलनिवासाय नित्याय परमात्मने ।**
**बलभद्रसुभद्राभ्यां जगन्नाथाय ते नमः ।।**

संसारोऽयं दुःखमयः । एतस्य बीजम् अज्ञानम्, अविद्या, माया वेति दार्शनिकानां चिन्तनम् । मोहान्धकारभरितेऽस्मिन् संसारे प्रतिजनं पीडयति दुःखम् । तस्मात् दावाग्निभूतात् दुःखात् सर्वोऽपि मुक्तये कृतप्रयत्नो भवति । अपि च साम्प्रतिकं विश्वं अशान्तं परिलक्ष्यते । अयं निजः परो वेति भावना अनुक्षणं विचालयति हृदयम् । शान्तेरुपलब्धिः आधुनिकनागरिकाणां कृते खपुष्पायते । तस्मात् भगवच्चरणशरणमाश्रयन्ते सर्वे। अतः विश्वे विद्यमानासु त्रयस्त्रिंशदेवतासु जनाः कदाचित् गोविन्दम्, कदाचित् विष्णुम्, कदाचित् शिवम्, कदाचित् गणेशम्, कदाचित् जगन्नाथम्, कदाचित् हरिं च भजन्ते । तत्र यः कश्चिद्वा देवो भवतु जगतः नाथः जगन्नाथः अत्यन्तभक्तवत्सलः, दीनानां नाथः, सर्वेषां बन्धुतुल्यो भवति । प्राच्यां दिशि पुरुषोत्तमक्षेत्रे प्रतिष्ठितोऽयं देवः विश्वबन्धुत्वसन्देशं वितनोति । अतः भक्ताः निजभावानुसारं तं देवं तदा तदा स्तुवन्ति । श्रीजगन्नाथमुद्दिश्य तस्मिन् दत्तादराः विविधानि स्तोत्राणि अरचयन् । तत्तादृशेषु भक्तोत्तमेषु आचार्यवेम्पटिकुटुम्बशास्त्रिमहोदयः अन्यतमः । तेन महोदयेन षोडशसंख्यकैः पद्यैः भगवन्तं हार्दं स्तुवन् भगवतः चरणाम्बुजयोः भक्तिकुसुमं सर्मर्पितम् । तस्मिन् स्तोत्रे जगतीकरणस्य सन्देशः कविना कथमाविष्कृत इति अत्र आलोच्यविषयः ।

कविः क्रान्तदर्शी । कविरयम् अधीतवेदवेदान्त-अलङ्कारशास्त्रः संस्कृतजगति अनन्यप्रतिभासम्पन्नः अन्ताराष्ट्रियख्यातिसम्पोषितः बहुमुखीप्रतिभासम्पन्नः लब्धप्रतिष्ठः संस्कृतज्ञः सम्प्रतिगुर्जरप्रान्तस्य सोमनाथसंस्कृतविश्वविद्यालये कुलपतिपदं मण्डयति । आचार्यस्यास्य श्रीविंशति, जगन्नाथषोडशी, श्रीगुरुप्रपत्तिः, धन्याष्टकञ्चेति इमानि स्तोत्राणि अत्यन्तं रमणियानि, भावगम्भीराणि, हृदयाह्लादकारिणी च सन्ति । इमे आचार्याः श्रीजगन्नाथस्य अनन्यभक्ताः सन्ति इति प्रमाणयति तैः विरचितं श्रीजगन्नाथषोडशी नाम लघुकाव्यम् ।

**जगन्नाथषोडशी -**

दारुब्रह्मश्रीजगन्नाथ अनन्तकोटिब्रह्माण्डस्य आधायकः, उत्पत्तिस्थितिलयकारणम्, स एव सर्वस्य हृदि सन्निविष्टः, सत्-चित्-आनन्दस्वरूपः, सर्वव्यापी, सर्वभूतान्तरात्मा, कर्माध्यक्षः, सर्वनियन्ता च । अतः तस्य स्वरूपविषये उपनिषत्सु ऋषिभिः एवं कीर्तितम् - **सत्यं ज्ञानमनन्तं ब्रह्म,** "यतो

वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत् प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व तत् ब्रह्मेति ।" (तैत्तिरीयोपनिषद् - ३-१)

**एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।**

**कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च** ।। इति ।।

(श्वे.उ - ६-११)

अयं देवः न कश्चित् अन्यः नीलाचलधाम्नि विराजमानः असौ सकलजनानां दुःखं समूलं विध्वंसयति, शोकेषु चिरं शान्तिं वितरति, सकलान्नपि लोकान् आनन्दयति । एतदेवोद्देश्यमस्ति भगवतः जगन्नाथस्य दार्शनिकविग्रहधारणे । उक्तं च स्कन्धपुराणे -

**खण्डनात् सर्वदुःखानामखण्डानन्ददानतः ।**

**स्वभावाद्दारुरेषो हि परं ब्रह्माबिधीयते** ।। (स्क.पु - २८-४०)

एषः देवः स्वयंभूः, एतस्य उपासनया सर्वोऽपि जनः मनोवाञ्छितं फलमश्नुते । विविधरूपेण भक्तान् अनुगृह्णाति देवः । उक्तं च -

**सर्वरूपमयो ह्येष सर्वमन्त्रमयः प्रभुः ।**

**आराध्यते यथा येन तथा तस्य फलप्रदः** ।। (स्क.पु - २८-४८)

अनेकतासु एकतायाः स्थापनम्, विश्वबन्धुत्वनिर्माणं च जगन्नाथचेतना भवति । एतत् द्वारा साम्प्रतिकयुगे जगतीकरणं नूनं भविष्यतीति । विश्वे एष एक एव तादृशदेवः यस्य महाप्रसादं आपामरचाण्डालपर्यन्तं विना भेदभावं सर्वे सम्भूय सेवन्ते इति । एतदेव जगन्नाथतत्त्वम्, चैतन्यम्, जगतीकरणं वा यत्र जातिधर्ममविगणय्य सर्वे महता उत्साहेन प्रसादसेवां कुर्वन्ति ।

जगन्नाथषोडशीकाव्ये पद्येषु कविः परोपकारभावनां, विश्वभ्रातृत्वम्, सकललोककल्याणभावम्, सहजमैत्रीभावम्, शान्तिभावम्, विश्वशान्तिसन्देशं च स्फुटयति । तत्राद्ये पद्ये सकललोककल्याणाय भगवान् जगन्नाथः स्वयं विग्रहवाद्रूपं धृतवान् । विग्रहस्य तस्य संस्कार- अनेकधा सञ्जातः यथा शरीरिणः संस्कारादिकमभिधीयते तथैव विश्वकल्याणनिमित्तं भगवतः शरीररिरूपेण संस्कारः न विरुद्धः इति । अपि च उक्तं शास्त्रे शरीरं व्याधिमन्दिरम् इति । लोकहिताय शरीरं धृतवतः भगवतः ज्वरादिव्याधिः जायते इति जगन्नाथसंस्कृतौ कथितमस्ति । ज्येष्ठस्नानपूर्णिमातः परम् आषाढकृष्णप्रतिपद्तिथिपर्यन्तं भगवान् जगन्नाथः ज्वराक्रान्तः सन् अनवसरगृहे निवसन् ज्वरादारोग्यलाभाय पथ्यं सेवते । ततश्च विश्वकल्याणाय स्वस्थं सन् रथारूढो भवति, पतितान् उद्धरति च । अतः भगवान् लीलापुरषः जगन्नाथः लोकान् नन्दयितुं तदा तदा विविधाः लीलाः रचयति । एतत्सर्वं भक्तानुग्रहार्थमिति अवगन्तव्यम् । एतेन विश्वशान्तिप्रतिष्ठा भवति ।



द्वितीये पद्ये सर्वेषामपि जनानां अहेतुकं मङ्गलं विदधाति भगवान् जगन्नाथः । मातुः सर्वेऽपि सन्ततयः प्रियाः भवन्ति स्यात् कामं सः बुद्धिमान्, मन्दः, मूढो वा परन्तु सर्वेषु तस्याः प्रीतिः अनन्या यथा तथैव भगवान् जगन्नाथः पतितान्, दीनान्, मूढान्, वञ्चितान् च जनान् समुद्धर्तुं सदा कृतप्रयत्नः इति । दयायाः सागरः स्नेहवत्सलः भगवान् तस्य समीपं ये केऽपि वा समागच्छन्ति तान् सर्वान् निर्विशेषेण उद्धरति । एतादृशः परमकृपालु भगवान् सर्वत्र शान्तिं विना किं वा प्रतिष्ठापयितुं शक्नोति ।

तृतीये पद्ये विश्वशान्तेः प्रतीकभूतोऽयं देवः सर्वान् प्रसादयति । तं दृष्ट्वा सर्वे प्रसीदन्ति । अयं भगवान् तादृशः यस्य समीपं पुण्यश्लोकाः सुकृतबलात् प्राप्नुवन्ति । ते तु तस्य न कदापि पराः भवन्ति, तान् करुणया तु नन्दत्येव परन्तु सकलविश्वबन्धून् भवबन्धात् तारयितुं स्वयं मन्दिराब्दहिः निर्गत्य जनजलनिधौ स्पर्शनसुखमनुभवन् सर्वान् आनन्दयति, सर्वत्र शान्तिसन्देशं वितनोतीति ।

चतुर्थे पद्ये हे जगतः नाथः ! त्वं विश्वे एकैव देवोऽसि यः सदा स्वाश्रितान् भक्तान् रक्षणे तत्परो भवति । यस्मै यदपेक्षितं तत्सर्वं दातुं प्रसारितकरः तिष्ठसि । तवदीनेषु दया अपरमेया, तव दया यस्योपरि तिष्ठति सः शान्तिं विन्दति । तव सार्वजनीनेयं चेतना निश्चयेन विश्वं संरक्षितुं प्रभवति शान्तिं च प्रतिष्ठापयतीति ।

पञ्चमे पद्ये कविः एवं कथयति हे परमकृपासागर विश्वदेव त्वम् अन्येषामपेक्षया विलक्षणोऽसि । तव मूर्तिः शान्तमयी, तव नयनविभवः अनुपमः, त्वयि परमरतिं ये कुर्वन्ति ते निःशङ्काः भवन्ति । तव समीपे दत्तचित्ताः ते सुखं तिष्ठन्ति । तव शरणमात्रेण शान्तिः लभते, अतः हे देव त्वमेव त्रैकालिकशान्तेः प्रतीकः । एतादृशस्य शान्तकान्तकमनीयरूपस्य देवस्य आश्रयमात्रेण विश्वशान्तिर्भविष्यत्येव ।

षष्ठे पद्ये कविः अमुं भावं प्रकाशयति - हे विश्वपति जगन्नाथ अयं जननमरणपरम्परारूपः संसारः निखिलदुःखानां नित्यनिलयरूपोऽस्ति । अत्र निवसन्तः सर्वेऽपि दुःखैः पौनःपुण्येनतप्ताः भवन्ति । तादृशान् भृशं तप्तान् त्वं सदा पक्ष्मपातनयनाभ्यमवलोकयसि । न केवलं तत् तान् अस्मात् अशान्तमयभवसागरात् समुद्धर्तुं बाहुद्वयं सदा प्रसार्य तिष्ठसि, तदर्थं तव कृते अन्येषामवयवानामपेक्षा एव न भवति । त्वं सदा तान् तप्तान् समुद्धर्तुं प्रयत्नशीलोऽसि, अहो कीदृशी ते कृपादृष्टिः अतः त्वमेव संसारे विद्यमानस्य मे अगतिकस्य गतिरसि । तव चरणशरणमेव मे लक्ष्यम् । अनेन पद्येन भगवतः अविशेषेण पतितोद्धारभावः यः परिस्फुटः सः विश्वशान्तेः द्योतकः । तस्मात् भगवतः जगन्नाथस्य चरणशरणेन विश्वशान्तिः अवश्यम्भावि इति ।

सप्तमे पद्ये कविः स्वीयं भावमेवमाविष्करोति - हे विश्वश्रेष्ठः जगन्नाथः ! तव लीला अनिर्वचनीया तव मैत्रीभावः विलक्षणः सदा त्वं सर्वान् जनान् स्वागतीकर्तुं प्रसारितकरोऽसि,

स्मितहासपुरःसरं तान् आत्मीयजन इव कुशलं पृच्छसि, न केवलं तावाता तव तोषो जायते पुनरपि त्वं तेभ्यः बन्धुजनमिव विविधरसोपेतं महाप्रसादं वितरसि, तादृश अस्मिन् को वा स्यात् । तव इयं मैत्रीभावना सर्वत्र शान्तेः सन्देशं प्रसारयत्येव । अतः हे शान्तिमूर्तिदेवः आश्रतिस्य मे त्वमेव शरणं भव । इत्यहं मनसा वाचा कर्मणा च कामये ।

अष्टमे पद्ये कविः अमुं भावमाविष्करोति – हे देव मद्रक्षकः नीलाचलनाथः अयं कलियुगः एतस्मिन् सर्वे स्वार्थमेव पश्यन्ति तदनुकुलतया व्यवहरन्ति च सर्वोऽपि अयं लोकः स्वार्थैकप्रवणो वर्तते । परन्तु त्वं विलक्षणोऽसि स्वीयां भार्यां लक्ष्मीं स्वसमीपे स्थानमदत्वा अग्रजं बलिनं बलभद्रम्, अनुजां शक्तिरूपिणीं सुभद्रां च सहैव स्थापयसि, एतद्वारा त्वं विश्वभ्रातृत्वभावं वितनोसि । तवेयं दृष्टिः नितरां शान्तिप्रदायिनी अस्ति । तव शरणे आगतानाम् अचिरेण शान्तिः मिलिष्यति ।

नवमे पद्ये भगवान् जगन्नाथः सकलशोकं हर्तुं समर्थः, उत्तमजनानां सुखं दुःखं च द्रष्टुं तव नयनं सततं तत्परमस्ति । विश्वे विद्यामानानां सकलजनानां शोकं हृत्वा एकान्ततः शान्तिं प्रयच्छति । **त्वं नः पिता योऽस्मान् अपरं पारं तारयसि ।** अर्थात् भगवान् जगन्नाथः अस्माकं दुःखहरणकर्ता शान्तिदाता च भवति नान्यः । अतः भवसागरे प्रतिपदं शोकसन्तप्तस्य मे त्वमेव शरणम् अधिष्ठानम् । सकलशोकः शान्तिप्रतिबन्धकभूतः, तादृशं प्रतिबन्धं निराकृत्य विश्वे शान्तिं प्रतिष्ठापयितुं त्वमेव समर्थः इति ।

दशमे पद्ये भगवतः महाप्रसाद अपि शान्तिसन्देशं वितनोति । समाजे विद्यमानान् जातिभेदान् महाप्रसादः ध्वंसयति । तव चरित्रं लोके सर्वोत्कृष्टं येन तव भक्ताः सहजतया त्वयि आकृष्टचित्ताः भवन्ति, तव कटाक्षमपि प्रकृष्टं येन संसारबीजभूतम् अज्ञानपटलं ध्वंसयति । तव सर्वाङ्गं शान्तिसमन्वितं वर्तते । अतः हे श्रेष्ठनाथ जगन्नाथ ! त्वम् अनाश्रतिस्य मे आश्रयोऽसि । अस्मिन् पद्ये सकलजनताः निखिलभेदं विस्मृत्य भगवतः महाप्रसादं संसेव्य सर्वे परमां शान्तिं प्राप्नुवन्ति ।

एकादशकुसुमे भगवतः नवकलेवरधारणद्वारा नवावतारः भगवान् विश्वशान्तिम्, विश्वबन्धुत्वं च प्रतिष्ठापयति । हे दीननाथ जगन्नाथ ! त्वं प्रतिद्वादशवर्षमन्तरा नवदेहं धारयसि, एतादृशं तव कर्म पापं नाशयति, शान्तिं च प्रतिष्ठापयति । आहितसकलसंस्कारः त्वं जनमानसात् मरणभीतिं निराकरोसि जननमरणलीलादिकं मिथ्येति प्रमाणयसि । अशान्तिनिवारणाय शान्तिप्रतिष्ठापनाय च युगे युगे अवतारग्रहणं देवानां प्रसिद्धमेव । तव नूतनदेहधारणं तन्निमित्तकमेव । तव देहधारणेन विश्वशान्तिः अवश्यमेव प्रतिष्ठिता भविष्यतीति न संशयः ।

द्वादशत्रयोदशपद्ययोः कविः भगवतः विश्वप्रसिद्धयात्रायाः शान्तिसन्देशं प्रयच्छति इति भावमाविष्करोति । तत्र आदौ विश्वेऽस्मिन् अपि विश्वे यद्यपि विविधदेवानां यात्राः भवन्ति, तथापि तवेयं यात्रा अनुपमा सर्वोत्कृष्टा च अस्ति । यात्रायामस्यां तव विश्वरूपदर्शनं जनानां दृष्टौ भवति ।



तव इदृशं रूपं विलोक्य दुःखमयं संसारं विस्मृत्य सुखं परमं शान्तिं च अनुभवन्ति । अपि च तवेयं यात्रा जन्मजन्मान्तरस्य कल्मषं समूलं विध्वंसयति । कुलगोत्रजात्यादिभेदान् अपघातयति, अतः सर्वेऽपि जनाः त्वयि आत्मीयताम् अनुभवन्तः परमां शान्तिं प्राप्नुवन्ति । एवञ्च शान्तिप्रतीकस्य अस्य भगवतः जगन्नाथस्य प्रसादः शान्तिं वितरति ।

चतुर्दशे पद्ये कविः भगवतः विश्वव्यापकधर्मत्वम् आविष्करोति, हे भगवन् ! जननमरणधर्मरहितः ! त्वं तव माता का ? मातुः दिदृक्षा च कथं सम्भवेत् ? सर्वत्र तव स्थितिः सदा कुत्र वा तव गन्तव्यं स्थानं स्यात् ? भक्तानां मानसराजहंसः त्वं सदा मृषालीलादिभिः तोषयसि, तव शरणे ये पतिताःआगच्छन्ति ते चिरं शान्तिं प्राप्नुवन्ति । त्वमेव अगतिकानामाश्रयः असि । शान्तिप्रेप्सुना त्वमेव शरणम् ।

पञ्चदशपद्ये भगवतः विविधरूपधारणं विश्वशान्तेः सूचनां प्रयच्छति इति कविः वर्णयति । भक्तमनविनोदाय तदा तदा विविधरूपं त्वं धारयसि । तवेदं रूपधारणं नैसर्गिकं कदाचित् सर्वविघ्नविनाशकस्य गणपतेः कदाचित् गोपीप्राणवल्लभकृष्णस्य, कदाचित् रघुकुलतिलकस्य श्रीरामचन्द्रस्य तव परमार्थतो यद्यपि किमपि विग्रहरूपं नास्ति तथापि लोककल्याणाय सर्वत्रशान्तिस्थापनाय पापविनाशाय च अरूपोऽपि त्वं रूपं धारयसि । अतः हे भगवन् ! तव महिमा अपरिमेया त्वं नः शान्तिदाता, अतः तव चरणकमलयोः आश्रयं देहि इति ।

अन्तिमे षोडशपद्ये भगवान् जगन्नाथः सर्वतत्त्वानामाधारः, सर्वचेतनानां चेतना, सर्वकरुणानामधिष्ठानम् इति भावम् आविष्करोति भक्तकविः । मानसिक–वाचिक–कायिकशान्तिनिमित्तं त्वमेव मे प्रकृष्टो हेतुर्भवसि, त्वमेव सकलदुःखोपशमनकर्ता सर्वेषा तत्त्वानाम् अधिष्ठानम्, त्वं शान्तेः साक्षात् विग्रहोऽसि । अतः त्वामाश्रत्यि निश्चयेन अहं नित्यशान्तिं प्राप्तुं शक्नोमीति । अतः हे विश्वाधिष्ठिता परमपिता ! जगन्नाथः ! त्वमेव मम शरणम् इति ।

एवं षोडशीकाव्यस्य समीक्षणेन सारभूतोऽयमर्थः निगृहीतो भवति यत् मानवजीवनस्य कृते अध्यात्मभावः, नित्यशान्तिः, अनुकुलचिन्तनं, परोपकारः इत्येते अंशाः प्रकृष्टं धनं भवन्ति । काव्यस्यास्य अध्ययनेन कवेः हृदयं कियत्सरलमकल्मषमध्यात्मभावपरिपूर्णं चास्यीति अनुमातुं शक्यते । येषां काव्यस्य समीक्षा अल्पमतिना मया कृता ते मम साक्षात् शास्त्रगुरवः, वेदान्तदर्शनेन सह अन्येषां दर्शनशास्त्राणां कश्चनसंस्कारः मह्यं ते प्रायच्छन्, तदेवं पाथेयं कृत्वा, किञ्चित् दुःसाहसं कृत्वा यत्किमपि लिखितम् । तत्र विद्यामानाः गुणाः प्रातःस्मरणीयानां पितृकल्पानां गुरुणामेव, ये सन्ति दोषाः ते ममैवेति शम् ।।

***

*आचार्यः, सर्वदर्शनविभागः,*
*राष्ट्रियसंस्कृतसंस्थानम्, श्रीसदाशिवपरिसरः, पुरी*

# रूपानुगपरम्परायां श्रीजगन्नाथस्य अनवसरलीलावैशिष्ट्यम्

प्रो. दाश गौरप्रिया

अव उपसर्गपूर्वकात् "वस्"धातोः घञ् प्रत्यये अवसर इति पदं अवकाशापरपर्यायं सूचयता स्व व्युत्पतिसाधुतां लभते। भगवान् नीलाचलपतिः श्रीजगन्नाथः स्व सेवकेभ्यः भक्तेभ्यो स्व सेवावसरं प्रयच्छत् सनाथीकरोति इति तस्य महत्भक्तवात्सल्यं सवावसरदत्वं च। यदा विशिष्टं हेतुमाश्रित्य सेवावसरं न दत्ते तदा अयं कालः अनवसर नाम्ना प्रसिद्धि लभते। न अवसरः अनवसर इति व्युत्पत्तिविधानात्। किञ्च ज्येष्ठपूर्णिमादेवस्नानपूर्णिमा नाम्ना प्रसिद्धिं लभमाना विश्वस्मिन् विश्वे भगवतः श्रीजगन्नाथस्य दारूविग्रहस्य स्नानोत्सवं विषयीकुरुते। तदुक्तं स्कन्दे –

**ज्येष्ठस्नानं भगवतो ये पश्यन्ति मुदान्विताः।**

**न ते भवाब्धौ मज्जन्ति यात्रासूत्कण्ठमानसाः।।**[१]

ततः प्रभृतिः पञ्चदशदिवसव्यापिनी भगवतः अनवसरलीला भक्तहृदयं विद्रायन्ती आनन्दकन्दाय तस्मै रूचिरानन्दं प्रयच्छन्ती स्वलीलागूढत्वं सम्पादयन्ती विलसति। सर्वगुह्यतमं प्रकरणामिदमाश्रित्य जनता स्वमत्यनुसारिणीं भावनां व्यनक्ति। कतिचन मूर्खाः भगवतः लोकलीलामनवगछन्तः तां साश्वतीं भगवच्चेष्टां हसन्तः अवहेलनया पश्यन्ति। एषा तेषामव्युत्पन्नतायाः अविमृश्यकारितायाश्च लिङ्गमात्रम्। वस्तुतः भगवति भगवल्लीलायां च अनित्यतायाः गन्धमात्रं नास्ति इति श्रुतिसमृती प्रमाणे।

**सर्वे नित्याः शाश्वताश्च गुणास्तस्य परात्मनः।**

**हानोपादानरहिताः नैव प्राकृतजाः क्वचित्।।**[२]

**रूपानुगचिन्तने अनवसरः –**

आषाढद्वये सम्प्राप्ते श्रीजगन्नाथः नवकलेवरेण आत्मानं विभूषयत् लोकतापं हरति स्वजनानन्दं च विबर्द्धयते। तदा दिनव्यापकः भगवतः अनवसरकालः संतिष्ठते। अस्याम् अनवसरलीलायां किमस्ति प्रकृतमिति रसिकानां भगवत्परिकराणां भक्तानां वैष्णवानामभिमतं प्रतिपाद्यते यथामतिः –

भगवान् नीलाचलनाथः श्रीलक्ष्म्यादि–महैश्वर्यमयिभिः प्रियाभिः मुदा संसेवितः नीलाचलाभिन्नायां द्वारकायां भक्तानन्दविधायिनीं पतितपावनीं लीलामाचरति इति रसिकभक्तानां मतिः।

तथा च अस्य सिद्धान्तरत्नस्यास्वादकेन भक्तावतारेण श्रीकृष्णचैतन्यदेवेन –

**प्रिय सोयं कृष्णः सहचरी कुरुक्षेत्रमिलितः**

**तथाहं सा राधा तदिदमुभयोः सङ्गमसुखम्।**



**तथाप्यन्तःखेलन् मधुरमुरलीपञ्चमजुषे**

**मनो मे कालिन्दीपुलिनविपिनाय स्पृहयति।।**[३]

इत्यत्र कालिन्दीतटवनान्तनिकुञ्जशायी ब्रजप्रेमास्वादी श्रीकृष्ण एव बैष्णवानां परमोपास्यत्वेन प्रत्यपादि। एतन्मते अयं जगन्नाथः एकदा ब्रजे स्वब्रजपरिकरैः नन्दादिभिः पितृभिः, सुवलादिभिः सखिभिः, श्रीराधादिभिश्च सखीभिः, अक्रीडत् वृन्दावने न्यवसत् च। कंसप्रेरितेन अक्रुरेण मधुपुरीमागत्य पापिनः कंसादीन् निहत्य समयानुरोधेन रराजत्वं निर्वाहयामास। ततः जरासन्धभीतिलीलामाश्रित्य स्व प्रजानुशासनं मधुपुर्याः द्वारावतीपुरीं निनीषता श्रीकृष्णेन स्व चेष्टया वसुमती पवित्रीकृता। कलावस्मिन् युगे तामेव लीलां प्रकटीकर्त्तुं श्रीकृष्णः श्रीजगन्नाथनाम्ना अवतार। यथा द्वारकायां प्रियासहस्रपरिसेवितोऽपि श्रीकृष्णः ब्रजेनिवसन्तीनां स्व राधादिप्राणप्रेष्ठानां प्रेयसीनां स्मरणं चकार तथा अत्राऽपि। स्व पितृणां, सुहृदां विशेषतः तदर्थाखिलाचेष्टानां महाप्रेमवतीनां गोपीकानां प्रेम्णा वशीभूतः श्रीजन्नाथः अनवरतं जगद्धितसाधने वर्त्तमानोऽपि मनसा वृन्दावनीयम् आनन्दातिशयं स्मरति। तथा च स्वजन्मर्क्षवासरे नीलाचले भक्तकृतमहार्हस्नपनविधिनासमादृतः ब्रजेपालितं जन्माष्टमीमहोत्सवं स्मरन् विप्रलम्भभावेन भावितो भवति। विरहपीडितः असौ भक्तकर्तृकं च सेवानुशासनं त्यक्तुकामः अनवसरलीलाव्याजेन ब्रजे वसन्तीनां राधादीनां स्मरणेन आत्मानं प्रवर्त्तयति। तेन प्रेमातिशयं असहता अनेन ज्वरलीला स्वीकृता। अन्यथा यस्य स्मरणमात्रेण त्रितापोपशान्तिम् इच्छता मुनिना –

**यत्पादपंकजपलासविलासभक्त्या**

**कर्माशयं ग्रथितमुदग्रथयन्ति सन्तः।**

**तदवन्नरिक्तमतययतेयोऽपि रुद्ध**

**स्रोतोगणस्तभरणं भज वासुदेवम्।।**[४]

इत्युक्तं कथमयं ज्वरदुःखमनुभवेत्। प्रेमानन्दशिरोमणेः स्वप्रियपरिकराणां स्मरणहेतुकः अयं शोकः शोकोत्थश्च व्याधिः नूनं तस्य लीलाविनोदिताप्रकटनाय भक्तभावसमुद्रम् उद्वेलनाय च समजनि इत्यत्र नास्ति काचिद् चित्रता।

**सर्वभक्तदृष्ट्वा अनवसरः –**

प्रकृतिपरिणामेषु गुणेषु भगवान् अस्पृष्टः अतः अयं निर्गुणः।

**जन्मकर्म च विश्वात्मन्नजस्याकर्त्तुरात्मनः।**

**तिर्यङ्नृषिषु यादस्सु तदत्यन्तविडम्बनम्।।**[५]

इति वचनेन भगवती कुन्तीदेवी अप्राकृतस्याऽपि अनादेः जन्म, पूर्णकामस्य च कर्म - प्रकृतिनियन्त्रणरहितमिति संसूचयन्ती तस्य अचिन्त्यशक्तिमत्वं विडम्वनशब्देन अभिलषति। अतः भगवान् यद् यद् चेष्टते तत् सर्वं किमपि प्रकृतेः परं शुद्धसत्वस्य विवर्त्तरूपं च इति विनिश्चितम्। भगवल्लीलारहस्यमुद्घाटयता व्यासेन परः प्रमाणभूते ब्रह्मसूत्रे "लोकवत्तुलीला कैवल्य"मिति सूत्रे लोकानुसारिण्यया लीलया भक्तः भगवान् च उभौ आनन्दमनुभवतः इति प्रमाणीकृतम्।

**"जन्म-कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः।**

**त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन।।**[६]

न पार्थाऽस्ति कर्त्तव्यं त्रिषु लोकेषु किञ्चन, नानवाप्तमवाप्तव्य वर्त एव च कर्मणि" इत्यादौ दिव्यजन्माऽहं दिव्यानि कर्माणि करोमीति सुस्पष्टः व्यक्तः। भगवत अस्य कर्माणि प्रशस्य तस्याप्राकृतसम्बन्धराहित्यं च स्फुटीकृत्य व्यासः ब्रवीति -

**कर्माणि पुण्यनिवहानि सुमङ्गलानि**

**गायज्जमत्कलिमलपहराणि कृत्वा**

**कलात्मना निवसता यदुदेवगेहे**

**पिण्डारकं समगमन् मुनयो निसृष्टाः।।**[७]

लोकलीलासु शरीरपरिग्रहेऽपि कश्चन लीलाविशेषो भवति। तेन अप्राकृतस्य अपरिणामिनः परिणामः नैव कल्पनायाः विषयोऽस्ति। अनादि अपि यथा जनिं लभते। अकामोऽपि यथा सहस्रपत्नीषु रिरंसते अविकार्योपि युद्धयादिषु संप्रवर्त्तते मुक्तानामपिमुक्तः मुक्तिदश्च पारिजातपुष्पोपहारकतया बद्ध्यते नित्यशुचिरपि नित्यस्नानादिषु संदृष्यते आत्मारामोऽपि नरेन्द्रसरोवरादिषु जलक्रीडासु रमते परमात्माऽपि कलेवरं परिग्रहं कुरुते। सर्वशिवस्य मूलोऽपि ऋजा अनवसरं लभते च। अस्य एवंभूतायां लीलया भगवतः स्वाभिप्रायः प्रकटीकुर्वन्त्या कुन्तीदेव्या एवमुद्गीतं श्रीमद्भागवते -

**भवेस्मिन् क्लिश्यमनानामविद्याकामकर्मभिः।**

**श्रवणस्मरणार्हाणि करिष्यन्निति केचन।।**[८]

संसारे तापत्रयप्रपीडितानां जनानां उपशान्तेः अनयायोपायोऽस्ति भगवत्कथा श्रवणादि साधनसमुदायः। अतः पतितपावनः भगवान् जीवनिवहोदिधीर्षुः कार्याय प्रवर्त्तते इति अयं बहिरङ्गमुदेश्यम् तस्य। अन्तरङ्गं तु तस्य भक्तवात्सल्यैकदीक्षाश्च स्वान्तरङ्गभक्तसम्पत्तिपरिवर्द्धनमेव। भक्तस्य तु भगवद्कथैव सर्वसाध्यसाधनचूडामणिरूपा अलौकिकी सम्पत्तिरस्ति। चेत् प्रतिदिनं कथेयं नवतां प्राप्येत एषा महासम्पत्तिः परिवर्द्धेत। भक्तस्य त्यक्तसर्वकामानां कथैकपुरुषार्थिनां कर्णमनसोः पुष्टीकर्तुं भक्तवत्सलः लीलासु रमते। कुन्तीदेवी तं रथारूढं भगवन्तं तन्निवेदयन्ती आह -



**श्रुण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः**

**स्मरन्ति नन्दन्ति तवेहितं जनाः।**

**त एव पश्यन्त्यचिरेण तावकं**

**भवप्रवाहोपरमं पदाम्बुजम्।।**[९] इति ।।

लीलासु च करुणिकीवृत्तिः सर्वप्रामुख्यं भजतेतमाम्। सहसा श्रवणादेव भक्तहृदयद्रावकत्वात्। अतः रामायणे मायामृगाद्यनुसरणादिषु पत्नीविरहादिकं, भागवते अक्रुरादिकतृकः स्वजनत्यागः, कलिकाले च स्वजनविरहेण व्याधिः, तजन्यः कलेवरत्यागश्च सर्वं किमपि भक्तहृदयद्रावकं भक्त-भगवतोः सम्बन्धोद्दीपकं प्रेमिभक्तप्राणसञ्जीवनरूपमस्ति इति भगवतः सर्वापि चेष्टा भक्तकल्याणाय इति विप्रतिपत्तेः नास्ति विषयः।

**पादट्टीपणी**

१. पुरूषोत्तममाहात्म्ये -२१.७२
२. वेदान्तस्यमन्तके
३. चै.च.मध्य.
४. श्री.म.भा.४१
५. श्रीम.भा.१.८.३०
६. श्रीमद्भगवद्गीता-४.९
७. श्री.म.भा.११.१.११
८. श्री.म.भा.१.८.३५
९. श्री.म.भा.१.८.३६

***



# श्रीजगन्नाथस्य नवकलेवरतत्त्वचिन्तनम्



डॉ. मखलेशकुमारः
सहायकाचार्यः

**सर्वेषां च देवानां राजा श्रीपुरुषोत्तमः।**
**सर्वेषां च क्षेत्राणां राजा श्रीपुरुषोत्तमः।।**

पुरुषोत्तमः भगवान् जगन्नाथः तथा तस्य स्थानं श्रीपुरुषोत्तमक्षेत्रं यथा विश्वविश्रुतं विद्यते तथैव अस्मिन् धाम्नि प्रचलिता जगन्नाथसंस्कृतिरपि विश्वविश्रुता प्रसिद्धा चास्ति। अत्र प्रचलितं धर्मदर्शनमपि बहुव्यापकं प्रशस्तं च विद्यते। कस्यापि सम्प्रदायस्य अत्र भेदः न दृश्यते। शैव-सौर-गाणपत्य-कौल-वैष्णवादिसर्वे सम्प्रदायाः अत्र जगन्नाथस्य संस्कृतौ समाहिताः दृश्यन्ते।

वस्तुतः जगन्नाथः साक्षात् निर्गुणः निराकारः ब्रह्म एव अस्ति, परन्तु निराकारे ब्रह्मणि उपासना तथा सरला सुगम्या न भवति। अत एव जगतः नाथः भगवान् जगन्नाथः इति, समेषां प्राणिनां कल्याणार्थं दारुणि दारुब्रह्मरूपेण प्रकिटतः सन् अनादिकालतः अत्र विराजते। वेदेषु अपि दारुब्रह्मणः सङ्केतः प्राप्यते एव। तद्यथा ऋग्वेदे-

**अतो यद् दारु प्लवते सिन्धोः पारे अपूरूषम्।**
**तदा लभस्व दुर्हाणो तेन याहि परस्तरम्।।** (ऋक्-१०.१५५.३)

कश्चिद् मते एषः अलक्ष्मी नाशकारकं मन्त्रमिति । परन्तु वेदभाष्यकारः सायणाचार्यः अस्यार्थः पुरूषोत्तमजगन्नाथविषयकमेव स्वीकरोति। सः कथयति यत् सिन्धुतीरस्थं स्वयम्भुवं दारुविग्रहस्वरूपिणं भगवन्तं जगन्नाथमाश्रित्य कोऽपि दिव्यलोकं गच्छन्तु इति । सिन्धुतीरे पुर्यामेव भगवान् जगन्नाथः दारूब्रह्मरूपेण पूजितः भवति। पुरीं विहाय अन्यत्र कुत्रापि भारतवर्षे समुद्रतीरे दारूब्रह्मणः पूजा अद्यापि न भवति। अत एव सायणाचार्यस्य उपर्युक्तं मतमस्माभिः अवश्यमेव ध्येयं ग्राह्यञ्च। उपर्युवतस्य वेदवर्णितस्य सङ्केतस्य पल्लवनं स्कन्दपुराणस्य पुरुषोत्तमक्षेत्रमाहात्ये अवलोवयते। तद्यथा-

**अहो तवायं खलु भाग्यराशिः**
**येन विरासीद्भुवि दारुमूर्तिः।**
**यस्यात्युपास्तिं श्रुतिराह मुक्ति-**
**प्रदामनात्मज्ञविमोहितानाम्।।**
**य एष प्लवते दारु सिन्धोः पारे ह्यपौरुषम्।**
**तमुपास्य दुराराध्यं मुक्तिं यान्ति सुदुर्लभाम्।** (स्क.पु.-पु.क्षे.मा.२१-२,३)

दारूब्रह्मजगन्नाथात् पूर्वमपि अत्र भगवतः अन्या प्रतिमा पूजिता भवति स्म, यस्याः उल्लेखः



ब्रह्मपुराणे कृतं वर्तते। सा प्रतिमा इन्द्रनीलमयी सर्वोत्कृष्टा सुमनोहरा च आसीत्। यस्याः दर्शनेन मानवाः निष्कामाः सन् श्वेताख्यं भुवनमनायासेन गच्छन्ति स्म। एतस्मात् कारणात् कार्यरहितः यमः भगवन्तं प्रार्थितवान्, तदा यमस्य प्रार्थनया भगवान् प्रतिमामेतां जातरूपपरिच्छदैः वल्लिकैः गोपितः। तद्यथा-

**ततः सा प्रतिमा देवि वल्लिभिर्गोपिता मया ।**
**तथा तत्र न पश्यन्ति मनुजाः स्वर्गकाङ्क्षिणः।।**
**प्रच्छाद्य वल्लिकैर्देवि जातरुपपरिच्छदैः।**
**यमं प्रस्थापयामास स्वां पुरीं दक्षिणां दिशम् ।।** (ब्र.पु.४५-७५, ७६)

इन्द्रनीलमयीप्रतिमायाः अन्तर्धाने सति अत्र समागतः राजा इन्द्रद्युम्नः एव पुनः भगवतः दारुमयीं मूर्तिं विधाय अत्र प्रतिष्ठाययामास। अत एव वर्तमानजगन्नाथमन्दिरस्य प्रतिष्ठाता अवन्तिकाधिपतिः राजा इन्द्रद्युम्नः एवास्ति। उक्तञ्च-

**एकदारुसमुत्पन्नश्चतुर्धा सम्भविष्यति।**
**दारवप्रतिमानानि विश्वकर्मा धरिष्यति ।**
**प्रतिष्ठापयिता त्वां हि इन्द्रद्युम्नःप्रसाधितः।।**(स्कन्दपुराणे, पु.क्षे.मा.- ४.६०,६१)

पुरूषोत्तमस्य जगन्नाथस्य नवकलेवरः संसारे अद्वितीयं महत्वञ्च विदधाति। संसारे उत्पत्तिविनाशौ देहस्य भवति इति तु प्रसिद्धम्। यथा जीर्णानि वस्त्राणि अपहाय कोऽपि नरः अपराणि नवीनानि वस्त्राणि गृहणाति तथैव देही अपि जीर्णं पुरातनं देहं त्यक्तवा नूतनं स्वीकरोति। उक्तञ्च गीतायाम्-

**वासांसि जीर्णानि यथा विहाय-**
**नवानि गृह्णाति नरोऽपराणि।**
**तथा शरीराणि विहाय जीर्णा-**
**न्यन्यानि संयाति नवानि देही।।**(श्रीमद्भगवद्गीता-२.२२)

भागवतेऽपि कथितं यत पञ्चत्वमापन्ने देहे कर्मानुगः देही पराधीनः सन् देहान्तरं प्राप्य प्राक्शरीरं त्यजति। तद्यथा-

**देहे पञ्चत्वमापन्ने देही कर्मानुगोऽवशः।**
**देहान्तरमनुप्राप्य प्राक्तनं त्यजते वपुः।।** (श्रीमद्भागवते-१०.१.३९)

देहान्तरसम्प्राप्तिः तु सामान्यनियमः भवति देहिनां कृते। देहनिर्माणेऽपि शरीरिणः कर्म एव प्रमुखं कारणं भवति। भगवति परब्रह्मणि न विद्यते एतादृशं किमपि कारणम्, तथापि विष्णुसंहितायां देवस्य कृतेऽपि जीर्णविग्रहत्यागपूर्वकनूतनविग्रहग्रहणं स्पष्टमुद्घोषितम्। तद्यथा-

**देहं देही यथा जीर्णं त्यक्त्वा देहान्तरं व्रजेत्।**
**त्यक्त्वा जीर्णं तथा बिम्बं देवोऽपि भजते नवम्।।**

भगवान् जगन्नाथः साक्षात् परब्रह्म एव अतएव विशुद्धे परमात्मनि श्रीजगन्नाथे न विद्यते देहदेहिभावः। अर्थात शरीरसंयोगवियोगरूपो व्यापारः तु अविद्यया कल्पितः भवति, तत्र परमात्मनि अविद्यायाः अवकाशः कथं भवितुमर्हति। शास्त्रेषु प्रतिपादितः यथा वस्तुनि जातिव्यक्तिविभागः कल्प्यते तथैव देहदेहिविभागोऽपि अविवेकपूर्वकं कल्पितः इति। कथितञ्च भागवते–

**देहदेहिविभागोऽयमविवेककृतः पुरा।**
**जातिव्यक्तिविभागोऽयं यथा वस्तुनि कल्पितः।।** (श्रीमद्भागवते-६.५.८)

मर्त्यावतारस्तु मर्त्यशिक्षणं इति भागवतवचनानुसारं भगवतः प्राकट्यस्य प्रमुखोद्देश्यं मर्त्यशिक्षणमिति। अत एव लौकिकीं लीलां कर्तुं भगवान् जगन्नाथः व्यापकः सन् व्याप्यः भूत्वा दारुविग्रहे प्रतिभासते। लौकिकी लीला तु लोकाधारेण एव करणीयम। लिखितं च ब्रह्मसूत्रकारेण यत् लोकवत्तु लीलाकैवल्यम्। अतः लौकिकत्वेन प्रतीयमानाऽपि भगवतः जगन्नाथस्य दारुब्रह्मपरिवर्तनमिति नवकलेवरसम्प्राप्तिलीला अलौकिकी एव।

दारुब्रह्मणः प्रतिष्ठाता राजा इन्द्रद्युम्नःएव पौराणिकसन्दर्भेण सुस्पष्टमिति, परन्तु तदारभ्य दारूब्रह्मपरिवर्तनं कदा कथञ्च करणीयमिति एतस्य साक्षात्सङ्केतः पुराणेषु न कृतम्। स्कन्दपुराणे काष्ठचयनं प्रतिमानिर्माणविधिं मूर्तिप्रतिष्ठामित्यादि विषयाः परोक्षतया निरूपिताः सन्ति, येषामेवाधारेण अद्यापि दारूब्रह्मपरिवर्तनं समस्तं कर्म सम्पादितं भवति। यतो हि अस्मिन् संसारे विद्यमानं सर्वं विनाशशीलमिति वर्तते। दारूविग्रहेऽपि विग्रहनिमार्णवस्तु काष्ठं सांसरिकमेव वर्तते। तस्यापि काचिद् अवधिः वर्तते। तस्य काष्ठस्य परिवर्तनं नवकलेवरसम्प्राप्तिः भवति जगन्नाथस्य इति।

भगवतः जगन्नाथस्य वंशधराः वयं इति दैतापतिजनाः स्वीकुर्वन्ति। अत एव भगवतः जगन्नाथस्य सर्वः विधिः मानवविधिवत् एते सम्पादयन्ति। प्रातःकालादारभ्य दैनन्दिनविधिः अपि मानवविधिसमानः एव कल्पितः भवति दारूब्रह्मस्वरूपिणः जगन्नाथस्य। एवम्प्रकारेण भगवतः जगन्नाथस्य कलेवरपरिवर्तनमपि मानवकलेवरपरिवर्तनमिव आचर्य्यते एतैः दैतापतिभिः ।

भगवतः बहुविधाः अर्चनाः प्रतिपादिताः सन्ति शास्त्रेषु। कोऽपि अर्चायां, स्थण्डिले, अग्नौ, सूर्ये, अप्सु, द्विजे, स्वहृदि भगवन्तं समर्चितुं शक्नोति। शैली, दारूमयी, लौही, लेप्या, लेख्या, सैकती, मनोमयी, मणिमयीभेदेन अर्चा अष्टविधाः भवति। एतासां अष्टविधानां प्रतिमानां निर्माणं स्थापनञ्च यथाशास्त्रं करणीयम्। चलाचलेतिभेदेन द्विविधा प्रतिमा भगवतः आश्रयमिति। पूजने अचलायां प्रतिमायामुद्वासावाहने न भवतः परन्तु चलायां तु विकल्पः विद्यते। कथितञ्च–



**शैली दारुमयी लौही लेप्या लेख्या च सैकती।**
**मनोमयी मणिमयी प्रतिमाष्टविधा स्मृता ।।**
**चलाचलेति द्विविधा प्रतिष्ठा जीवमन्दिरम्।**
**उद्वासावाहने न स्तः स्थिरायामुद्धवार्चने।।** (श्रीमद्भागवते-२७.१२.१३)

शास्त्रेषु एतासां प्रतिमानां परमायुः अपि परिकल्पिता विद्यते। यथा मणिविग्रहस्य १० सहस्त्रवर्षम्, धातुविग्रहस्य १सहस्त्रवर्षम्, दारुविग्रहस्य १२वर्षम्, चित्राकारविग्रहस्य १वर्षम्, मृण्मयविग्रहस्य मासपर्यन्तमिति परमायुः भवति। परमायुमाधारीकृत्य अपि दारुब्रह्मपरिवर्तनमावश्यकं प्रतीयते। अतएव प्रतिद्वादशवर्षानन्तरं अनवसरे सम्प्राप्ते सति भगवतः ब्रह्मपरिवर्तनं भवति। अनवसरे एव ब्रह्मपरिवर्तन क्रियते यतो हि ब्रह्मपरिवर्तनविधिं प्रतिमानिर्माणं प्रतिष्ठानिमित्तं यागादिकं च परिपालनीयं भवति। तदर्थं कालमपेक्ष्यते। अनवसरे प्रायः मासद्वयं प्राप्यते ब्रह्मपरिवर्तननिमत्तमिति। अतएव द्वादशवर्षमेव परमायुः वर्तते काष्ठप्रतिमायाः इति विद्यमानेऽपि आषाढमासे एव अधिमासस्य सम्प्राप्तौ दारूब्रह्मपरिवर्तनं क्रियते।

राज्ञः इन्द्रद्युम्नस्य काले यः विद्यापतिः विश्वावसुः विश्वकर्मा च एतेषां श्रीविग्रहणां निर्माणे स्थापने पूजाविधिसम्पादने च अधिकृतः तस्य एव वंशधराः प्रसिद्धाः दैतापतयः महारणाश्च अद्यापि विद्यापति–विश्वावसु–विश्वकर्मारूपेण वरणं प्राप्य भगवतः नवकलेवरं सम्पादयन्ति। वरणं प्राप्य दैतापतयः सेवायताः महारणाश्च सर्वे तपोनिरताः विशुद्धाः सन् चैत्रमासस्य दारुसम्प्राप्तये निर्गच्छन्ति। प्रतिमाकृते निम्बः श्रीपर्णः पनसः सरलः अर्जुनः रक्तचन्दनद्रुमः श्रेष्ठः भवति। यथा–

**निम्बः श्रीपर्णवृक्षश्च पनसः सरलोऽर्जुनः।**
**रक्तचन्दनपर्यन्ताः श्रेष्ठाः स्यु प्रतिमाद्रुमाः।।**

अतः जगन्नाथस्य विग्रहकृते निम्बवृक्षः श्रेष्ठः स्वीकृतः। अतः तत्र अरण्ये अन्वेषणपरायणाः दैतापतयः शङ्खचक्रगदापद्मचिन्हितं यथालक्षणं दारुद्रुमं प्राप्य तत्र ब्राह्मणैः यथाविधिं वनयागादिपुरस्सरं दारुसंग्रहं विधाय श्रीमन्दिरं प्रति आनयन्ति । तत्रैव श्रीमन्दिरे प्रतिमानिर्माणपुरस्सरं यथाशास्त्रं यथाविधिं दारूब्रह्मपरिवर्तनं परिपालितं भवति। एतदनन्तरं प्राचीनं विग्रहं कोइलीवैकुण्ठे स्थापय्यते । एषा प्रक्रिया जगन्नाथस्य नवकलेवरः इति उच्यते। नवकलेवरविषयकस्पष्टपौराणिकसन्दर्भस्य अभावेऽपि उपर्युक्तप्रतिपादनेन स्पष्टं यत् भगवतः जगन्नाथस्य नवकलेवरं युक्तिसङ्गतमिति दिक्।

***

*राष्ट्रियसंस्कृतसंस्थानम्, (मा.वि.)*
*श्रीसदाशिवपरिसरः, पुरी, ओडिशा*

# दारुदेवता श्रीजगन्नाथः

डॉ. राधामणिप्रतिहारी



**नीलाद्रौ शङ्खमध्ये शतदलकमले रत्नसिंहासनस्थं**
**सर्वालंकारयुक्तं नवघनरुचिरं संयुतं चाग्रजेन।**
**भद्रायाः वामभागे रथचरणयुतं ब्रह्मरुद्रेन्द्रवन्द्यं**
**वेदानां सारमीशं स्वजनपरिवृतं ब्रह्मदारुं स्मरामि।।**

नीलाचलपीठे नीलकन्दरे नीलाद्रिनाथः श्रीजगन्नाथः ज्येष्ठभ्रात्रा बलभद्रेण भगिन्या सुभद्रया सुदर्शनेन सह रत्नसिंहासने विराजते। एते चतुर्द्धामूर्तयः दारुब्रह्मस्वरूपेणाख्याताः। दारुदेवता श्रीजगन्नाथः अनादिकालादेव दारुब्रह्मरूपेण पूजितो भवति। दारुसंस्कृतिरेव श्रीजगन्नाथसंस्कृतिः। श्रीजगन्नाथसंस्कृतिरेव उत्कलीयसंस्कृतिः। पुरुषोत्तमश्रीजगन्नाथः तत्र विराजते तस्मात् कारणात् अयमुत्कलदेशः धन्यः तद्देशवासिनः जीवन्नपि तेषां जीवनं सफलमिति ब्रह्मपुराणे निगदितम्।

**ये वसन्त्युत्कलक्षेत्रे पुण्ये श्रीपुरुषोत्तमे।**
**सफलं जीवनं तेषामुत्कलानां सुमेधसाम्।।** ब्र.पु.४२/४६

जगतां नाथः जगन्नाथः। न केवलमुत्कलीयानां कृते समग्रभारतवर्षेऽपि अयमेव जगन्नाथः दारुदेवतारूपेण पूजितो भवति। जगन्नाथसंस्कृतिरेव भारतीयसंस्कृतिः। जगन्नाथसंस्कृतिः पृथिव्यामेका प्राचीनतमा सुप्रसिद्धा संस्कृतिः। यतः श्रीजगन्नाथः समन्वयस्य देवता। जगन्नाथसंस्कृतौ जातिभेदः न दृश्यते। शैव -शाक्त-जैन-बौद्ध-वैष्णव-हिन्दु-द्वैतवादिनामपि सर्वेषामाराध्यदेवतारूपेण श्रीजगन्नाथः पूज्यते। **वसुधैव कुटुम्बकम्** इति न्यायेन सर्वेषां विश्ववासिनां कृते अभयप्रदानाय श्रीपुरुषोत्तमक्षेत्रे दारुदेवतारूपेण उपासितो भवति। विश्वेऽस्मिन् याः देवताः विभिन्नेषु तीर्थस्थलेषु देवालयमठमन्दिरादिषु पूजिताः भवन्ति तासां कलेवरः शिलाधातमुर्त्तिकादिभिः निर्मितोऽस्ति, परं श्रीजगन्नाथस्य कलेवरः नीम्वकाष्ठेन विनिर्मितः वर्त्तते। अस्मादेवकारणात् श्रीजगन्नाथः दारुदेवता इति उच्यते। जगन्नाथसंस्कृतेः एतदेवास्ति महद्वैचित्र्यम्।

हिन्दुसाहित्ये श्रीजगन्नाथस्य दारुउपासना सर्वत्र ससन्मानं स्वीकृता अस्ति। यतः श्रीजगन्नाथः दारुदेवतारूपेण बहुप्राचीनकालात् उपासितो भवति। इयं दारुउपासनापद्धतिः शवरसंस्कृतेः सृष्टः। पुरा शवरजातेः इष्टदेवरूपेण श्रीजगन्नाथः पूजितोऽभवत्। प्राचीनकाले आदिवासिनोऽपि वृक्षोपासनामकुर्वन्। अथर्ववेदेऽपि वृक्षं दारुसदनमिति इति उक्तम्। तदेव वृक्षपूजाकालान्तरे दारुउपासना यां रूपान्तरितः जातः। यथा चोक्तं दारोः माहात्म्यविषये जन्मजन्मान्तरपापानि दारयति दारयति विनाशयति वा इति दारुः। श्रीजगन्नाथस्य दारुमूर्त्तिः विकासस्य परम्परा शवरसभ्यतायाः प्रतीक इति वक्तुं शक्यते।



भारतीयसंस्कृतौ सर्वत्र वट-अश्वत्थ-विल्व-धात्री-नीम्वतुलसीप्रभृतयः वृक्षाः बहुप्राचीनकालादेव पूजिताः सन्ति। शवराः अपि तथैव प्राचीनकालादेव वृक्षं दारुं वा पूजयन्ति स्म। शवराणामादिमवृक्षदेवता कालक्रमेण दारुरूपेणोपासिता अभवत्। मूलवृक्षस्य परिवर्त्तनेनापि तत् पूजोपासनायाः न किमपि परिवर्त्तनं दृश्यते। एतस्मात् प्रमाणीक्रियते यत् दारुमूर्तिपरम्पराविकासस्य परम्परा तथा शवराणां संस्कृतिः शवरपरम्परायाः सृष्टः। अत एव दारवीयजगन्नाथः दारुदेवतारूपेण रूपान्तरितं केवलम्। तस्मादिनादारभ्य दारुदेवता श्रीजगन्नाथः दारुब्रह्मरूपेण पुरुषोत्तमक्षेत्रे ब्राह्मण्यधर्मस्य प्रतीकरूपेणोपासिता भवति।

तीर्थराजमहोदधेः उपकूले श्रीपुरुषोत्तमक्षेत्रे श्रीपुरुषोत्तमः जगन्नाथः मर्त्यवासिनां मन्दमतीनां जनानां पापविमोचनाय अभयप्रदानाय च विराजते। अतः ये मर्त्याः महोदधौ पवित्रस्नानपूर्वकं भक्तिपूर्णचेतसा पुरुषोत्तमश्रीजगन्नाथदर्शनं कुर्वन्ति ते मोक्षं प्राप्नुवन्तीति विषये प्रतिपादितमस्ति ब्रह्मपुराणे - **तीर्थराजजले स्नात्वा पश्यन्ति पुरुषोत्तमे।**
**स्वर्गे वसन्ति ते मर्त्या न ते यान्ति यमालये।।** ब्र. पु ४२/४५

पुनः क्षीयन्ते पापाः यत्र तत् क्षेत्रम् इति वचनमनुसृत्य पुरुषोत्तमक्षेत्रगमनेन मनुष्यस्य सर्वपापाः विनष्टाः भवन्ति। पुरुषोत्तमश्रीजगन्नाथः अत्र विराजमानत्वात् क्षेत्रमिदं विश्वप्रसिद्धम्। क्षेत्रस्यास्य माहात्म्यविषये कपिलसंहिता भणति -**क्षेत्रं नीलाचलं पुण्यं दारुब्रह्मस्वरूपिणः**। तथैव क्षेत्रस्य वैशिष्ट्यं प्रतिपादयति। तदुक्तमस्ति ब्रह्मपुराणे

**समुद्रस्योत्तरे तीरे तस्मिन्देशे द्विजोत्तमाः।**
**आस्ते गुह्यं परं क्षेत्रं मुक्तिदं पापनाशनम्।।** ब्र. पु४२/१३

अनेन प्रकारेण क्षेत्रस्यास्य माहात्म्यं प्राचीनशास्त्रेषु पुराणेषु अपि बहुधा प्रतिपादितमस्ति। अत्र यथा देवदेवपुरुषोत्तमश्रीजगन्नाथस्य माहात्म्यं च दृश्यते तथैव क्षेत्रस्यास्य क्षेत्रवासिनामपि माहात्म्यमवगम्यते। क्षेत्र क्षेत्रज्ञयोः एतादृशः एकात्मभावः न कुत्रापि परिलक्षते। यथा चोक्तं कपिलसंहितायाम्- **सर्वेषामपि देवानां राजा श्रीपुरुषोत्तमः।**
**सर्वेषामपि क्षेत्राणां राजा श्रीपुरुषोत्तमः।।** क.संहिता५/३९

एवं प्रकारेण पर्यालोचनयां ज्ञायते दारुदेवता पुराणपुरुषः पुरुषोत्तमः श्रीजगन्नाथः स्वयमत्र विराजयन् क्षेत्रस्य क्षेत्रवासिनां च वैशिष्ट्यं वर्द्धयति इति दिक्।

***

# ब्रह्मपुराणे श्रीजगन्नाथस्य द्वादशयात्रामाहात्म्यम्

डॉ. कृष्णचन्द्रकविः



सर्वागमनिगमस्मृतिपुराणेतिहासोपनिषदादिषु शश्वदानन्दप्रदायकेष्विह-लौकिकपारलौकिकफलप्रदातृषु च शास्त्रेषु परंब्रह्मपुरुषोत्तमः श्रीजगन्नाथः परिवर्त्तनशीलस्य मिथ्यामायाप्रपञ्चितस्य जगतः अपरिवर्त्तनीयसत्तारूपेण प्रतिपादितोऽस्ति। किंञ्चायं हि पुरुषोत्तमः श्रीजगन्नाथः परमात्मा परंब्रह्म परात्परः परमेष्ठी निराकारः कदाचित् भक्तजननिस्तारणाय दुष्टसंयमनाय धर्मसंस्थापनार्थाय च मत्स्यकूर्मवराहनृसिंहवामनादिरूपेणावतरति इति शास्त्राणि व्याकुर्वन्ति। अनाद्यनन्तकालादारभ्य शङ्खनाभिक्षेत्रे नीलपर्वते रत्नसिंहासनोपरि एष राराजते। निर्गुणनिराकारोऽपि सोपाधिकेन मायया सगुणसाकाररूपं धृत्वा भ्रात्राबलदेवेन भगिन्यासुभद्रिकया च सह भक्तजनेभ्यः जीवस्य चरमलक्ष्यभूतान् धर्मार्थकाममोक्षान् पुरुषार्थचतुष्टयान् प्रयच्छति। अस्यैव परब्रह्मपुरुषोत्तमश्रीजगन्नाथस्य विविधलीलादर्शनेन आब्रह्मस्तम्वपर्यन्ताः सर्वे जीवाः सवनाय योग्याः भवन्ति। नीलकन्दरवासिनोऽस्य दर्शनमाहात्म्यं केनापि विदुषा इत्थं प्रतिपादितम्।

**तपस्या वदरिधाम्नि भ्रमणं गोकुले वने।**
**वाराणस्यां कृतो वासः दर्शनं पुरुषोत्तमे।।**

शङ्खक्षेत्रपुरुषोत्तमे श्रीजगन्नाथदर्शनं यथा महत्त्वं धत्ते न तथैव अन्यकर्मसु महत्त्वं विलोक्यते। उत्कलीयानां परमाराध्यः पुरुषोत्तमः श्रीजगन्नाथः शास्त्रेषु परमरहस्यमयदेवरूपेण प्रतिपादितः। सः एव स्वेच्छयास्य जगतः स्थितिसंयमोदयान् विदधाति। समस्तानां षडैश्वर्याणां मूर्त्तीमन्तप्रतीभुश्चायं वर्तते। एनं ये यथा भजन्ति तथैव ते तस्य स्वरूपमवलोकयन्ति। जगन्नाथक्षेत्रे एव श्रीमद्भगवद्गीतायाः सप्रसिद्धवचनमिदं सत्यं भाति। **ये यथा मां प्रपद्यन्ते तां तथैव भजाम्यहम्।**
**मम वर्त्मानुवर्त्तन्ते मनुष्याः पार्थसर्वशः।।**भगवद्गीता

पुरुषोत्तमश्रीजगन्नाथः भक्तजनप्रमोदाय भारतीयसमाजे ऐक्यतायाः संस्थापनाय भाव-प्रेम-सदाचार-धर्मप्रवणतायाः प्रचारप्रसाराय च विविधेषु तिथिपर्वोत्सवादिषु नैकविधानि रूपाणि धत्ते। तेषां रूपाणां दर्शनेन भागवताः पञ्चविधासु सायुज्यसालोक्यादिमुक्तिषु कामप्येकामधिगच्छन्तीति शास्त्रकाराः चिन्तयन्ति। प्रत्येकस्य मासस्य विविधेषु पर्वोत्सवादिषु एष यानि रूपाणि विभर्ति ये चापि क्रियाकलापाः श्रीमन्दिरे परिपाल्यते ते सर्वे यात्रारूपेण गणिताः भवन्ति। वैशाखादिद्वादशमासेषु यथा श्रीविष्णोः द्वादशनामानि भवन्ति तेनैव नाम्ना भक्ताः श्रीजगन्नाथं पूजयन्ति। अयं देवः द्वादशमासेषु द्वादशयात्राः अष्टाविंशतिः उपयात्राः आचरन् सदाभक्तजनान् मोदयति। ताः द्वादशयात्राः इत्थं शास्त्रेषु भणिताः सन्ति।



यथा १.स्नानयात्रा २.रथयात्रा ३.शयनयात्रा ४.दक्षिणायनयात्रा ५. पार्श्वपरिवर्त्तनयात्रा ६. उत्थापनयात्रा ७. प्रावरणषष्ठी यात्रा ८.पुष्यपूजा ९. उत्तरायणयात्रा१०. दोलोयात्रा ११. दमनकचतुर्द्दशी १२. अक्षयतृतीया च। एतासां रीतिनीतिकालनिर्द्धारणविषये विशेषतः स्कन्दब्रह्ममहापुराणयोः यात्राभागवते नीलाद्रिमहोदये वामदेवसंहितायां चापि उल्लेखः दृश्यते।

एताः यात्राः श्रीजगन्नाथस्य लीलाः इति वर्णयन्ति विपश्चितः। भगवतः लीलामाधुर्यादीनामास्वादनमेव उत्तमाभक्तिरिति निगद्यते । यया च जीवः जीवत्वं विहाय परमात्मानमधिगच्छति ।

**अन्याभिलषिता शून्यं ज्ञानकर्माद्यनावृतम्।**
**आनुकूल्येन कृष्णानुशीलनं भक्तिरुत्तमा।।** ह. र.सि.पूर्वविभागे १/११

किं च विविधानां लीलानां दर्शनेन मनुष्यस्य हृदि भक्तिः समुदेति। ततः स भगवत् तत्त्वं ज्ञात्वा परमात्मन्यात्मानं संयोजयति।

**भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ।**
**ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ।।**

**पुरुषोत्तमश्रीजगन्नाथः**

भगवान् श्रीजगन्नाथः स्कन्दपद्मब्रह्मादिषु जगन्नाथतत्त्वप्रतिपादकेषु पुराणेषु पुरुषोत्तमः कीर्त्तितः,किञ्च तत् क्षेत्रमपि पुरुषोत्तमक्षेत्रमिति उच्यते। भगवान् यशोदानन्दवर्द्धनः श्रीकृष्णचन्द्रः सर्वदर्शनसारे श्रीमद्भगवद्गीतायां पुरुषोत्तम इति ख्यातः। सह्येव क्षरादतीतः अक्षरादपि च उत्तम इति तत्र प्रतिपादितोऽस्ति। **यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः।**
**अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः।।** गीता १५/१८

ईश्वरस्यानया उक्त्या प्रतीयते यत् सः एवास्ति पुरुषोत्तमः परमात्मा परमपुरुषः सच्चिदानन्दघनः परंब्रह्म । स ह्येव परमात्मापुरुषोत्तमक्षेत्रे दारुदेहेऽवतीर्णत्वात् दारुब्रह्मत्वेन कल्पितः। भगवता व्यासदेवेन स्वस्य कृतिष्वनेकेषु स्थलेषु पुरुषोत्तमस्य महत् वर्णनमुपस्थापितम्। तासामुक्तीनामालोडनेन इदमेव ज्ञायते यत् पुरुषोत्तमो नाम श्रीजगन्नाथ एव।

**यज्ञेश्वरो यज्ञपुमान् पुरुषैः पुरुषोत्तमः।**
**एवं पूर्वः जगन्नाथात् देवदेवो जनार्द्दनात्।**
**वरं प्राप्य ध्रुवः स्थानमध्यास्ते स महामते।।**

(वि. पु. ६/४/४२)(१/१२/९३)

अपि चास्य पुराणस्य मतानुसारं यस्य क्षयोवृद्धिर्वा नैव जायते स पुरुषोत्तम इति।( वि. पु. ६/८/५९) ।अनादि कालतः आरभ्य अयं देवः नीलाचलधाम्नि राराजते। देवाः वेदाः अपि अस्य स्तवनं कुर्वन्ति। अयं हि देवः भक्तजनानां शोकतापविनाशाय पतितानां विमोक्षणाय दुष्टानां दलनाय

च विविधैः रूपैः मानवीयलीलां करोति। कदाचिदयं भक्तस्य मनोभिलषितानुसारं नानाविधानि रूपाण्यपि धारयति आल्हादयति च विपश्चितः। अत्र पावनपुरुषोत्तमधाम्नि भगवान् याः लीलाः आचरति ताः यात्रा इति कथयन्ति तत्त्वविदः। भगवतः याः यात्राः अत्र परिपाल्यते ताः यथाकालानुसारं विशदिक्रियते ।

**पुरुषोत्तमधाम्नि विविधायात्राः माहात्म्यं च**

पुरुषोत्तमधाम्नि वैशाखादिद्वादशमासेषु त्रयोदशयात्राःभवन्तीति लोकविश्रुतावाणी सुप्रसिद्धा वर्त्तते। परमितोप्यधिकाः यात्राः परिपालिताः भवन्ति। एतासु यात्रासु द्वादशयात्राः सेतिहासपुराणेषु सन्ति प्रख्याताः। एतासां विषये कश्चन प्रख्यातः श्लोकः विद्वद्भिः गीयते ।

**मञ्चस्नानं रथवरगतिः सायनं चायने द्वे।**
**पार्श्ववृत्तिः शयननिवृत्तिः पावृटौः पुष्यपूजा।।**
**दोलयात्रादमनकोमहोतार्क्षपूजा तृतीया।**
**चैवं यात्रा विधिनिगदिता द्वादशैताः नरेन्द्रः।।**

ब्रह्मपुराणानुसारं द्वादशयात्रासु महाज्येष्ठस्नानयात्रागुण्डिचायात्रे सर्वश्रेष्ठे इति प्रतिपादिते स्तः। अध्यायद्वये अनयोः माहात्म्यं प्रतिपादितं वर्तते। यदा राशिनक्षत्रयोगतः महाज्येष्ठी भवति तदा नरेण अवश्यमेव पुरुषोत्तमक्षेत्रं गन्तव्यम्। तत्र अस्याः एकस्याः यात्रायाः दर्शनेन द्वादशयात्राफलं लभते मनुष्यः। पृथिव्यां यानि तीर्थानि भवन्ति तेषु स्नानदानतपस्यायां यानि फलानि प्राप्नुवन्ति भक्ताः तानि सर्वाणि एकस्याः अस्याः दर्शनेन प्राप्यते। तदुक्तमस्ति–

**यत्फलं स्नानदानेन राहुग्रस्ते दिवाकरे।**
**तत्फलं कृष्णमालोक्य महाज्येष्ठ्यां लभेन्नरः।।** ब्रह्म पु६४/१६

भक्तः रामं कृष्णं सुभद्रया सह स्नानयात्रामण्डपे दृष्ट्वा स्वकुलं समुद्धृत्य वैष्णवं योगमस्थाय विष्णुलोकं प्रव्रजति अन्ते च सर्वसुखदायकं पुरुषार्थचतुष्टयेष्वन्तिमं मोक्षं लभते। देवगन्धर्वाः स्वपत्निभिः देवदेवो जगन्नाथस्य स्तुतिं कुर्वन्ति। आकाशगोचराः मेघाः मन्दं मन्दं पुष्पमिश्रं वर्षन्ति। सिद्धचारणगणाः स्वगणैः जयशब्दं कुर्वन्ति। गीतवाद्यपताकाभिरलंकृते स्नानमण्डपे विराजन्तं कृष्णं रामं सुभद्राञ्चालोक्य कन्याशतप्रदानस्य फलं लभते। श्रीजगन्नाथदेवस्य गुण्डिचायात्रा अपि ब्रह्मपुराणानुसारं विशिष्टं स्थानं भजते। ये मानवाः रथारूढान् चतुर्द्धामूर्त्तिः प्रपश्यन्ति ते हरेः भवनमवश्यमेव गच्छन्ति। तत्रापि सप्ताहं यावत् मण्डपेस्थितं हलिनं सुभद्रां च ये विलोकयन्ति ते विष्णुलोकं व्रजन्ति। भगवतः इमां यात्रां दक्षिणायनयात्रा इति कथयन्ति। अस्याः यात्रायाः समायोजनस्य मूलं कारणं किमिति मुनिशङ्कानिवारयन् आदिदेवः ब्रह्मा एवं वक्ति –

**इन्द्रद्युम्नेन भो विप्राः पुरा वै प्रार्थितो हरिः ।**



**सप्ताहं सरसस्तीरे मम यात्रा भवत्विति।।**
**गुण्डिचा नाम देवेश भुक्तिमुक्तिफलप्रदा।**
**तस्मै किल वरं चासौ ददौ स पुरुषोत्तमः।।**
**सप्ताहं सरसस्तीरे तव राजन्भविष्यति।**
**गुण्डिचा नाम यात्रा मे सर्वकामफलप्रदा ।।** ब्रह्म. पु६६/६–८

अतः परं प्रसङ्गानुसारं द्वादशयात्राः तासां माहात्म्यमस्मिन् पुराणे प्रदत्तमस्ति। द्वादशयात्राविधिः समाप्य नरेण किं वा कर्त्तव्यं तदपि अत्र विस्तृतरूपेण वर्णितमस्ति। ये गुण्डिचायां फाल्गुने उत्थाने विषुवे चापि दारुरूपिणं श्रीजगन्नाथं पश्यन्ति ते यावदिन्द्राश्चतुर्द्दशः तावत् विष्णुलोकं गच्छन्ति।

**गुण्डिचायां तथोत्थाने फाल्गुन्यां विषुवे तथा ।**
**यात्रां कृत्वा विधानेन दृष्ट्वा कृष्णं प्रणम्य च।।**
**संकर्षणं सुभद्रां च लभेत्सर्वत्र वै फलम्।**
**नरोगच्छेद्विष्णुलोके यावदिन्द्राश्चतुर्द्दशः।।** ब्रह्म पु ६७/३–४

अस्य पुराणस्य मतानुसारं ये भक्ताभुक्तिमुक्तिप्रदे सर्वसुखावहे पुरुषोत्तमक्षेत्रे संयतेन्द्रियः सन् यथोक्त विधानेन द्वादशयात्राः समाचरन्ति तथा च विष्णोः प्रतिमायाः प्रतिष्ठां च कुरुते सः इह जन्मनि नाना विधान् भोगान् भुक्त्वा अन्ते मोक्षपदानि विन्दते। यदा द्वादशयात्राः सम्पूर्णास्यात् तदा पापनाशिन्याः विष्णुप्रतिमायाः प्रतिष्ठाकार्या। इयं प्रतिष्ठा ज्येष्ठेमासे सिते पक्षे एकादश्यां क्रियते। तत्र प्रतिष्ठायाः महती परम्परा विवृतास्ति। यथाविधिः प्रतिष्ठाकार्यं सम्पाद्य पञ्चोपचारैः पूजनं कृत्वा ॐ नमः पुरुषोतमाय इति मन्त्रमष्टोत्तरशतं जपेत् रात्रौ जागरणमपि कार्यम्। ततः द्वादश्यां प्रभातकाले संयतेन्द्रियान् इतिहासपुराणज्ञान् ब्राह्मणानाहूय यथा विधिः पुरुषोत्तमं स्नापयेत् । नाना विधैः गन्धैःपुष्पोपहारैश्च तस्य पूजा विधातव्या ।

एवं भगवतो श्रीपुरुषोत्तमस्य द्वादशयात्राः यथा विधिरनुष्ठाय सम्वत्सरान्ते प्रतिमाप्रतिष्ठापुरसरं यात्राविधेरुत्सर्जनं यः करोति स कुलैकविंशतिमुद्धृत्य अन्ते परमात्मनः अक्षरधाम प्राप्नोति। तस्य आध्यात्मिकाधिभोतिकाधिदैविकादिनि त्रिविधदुःखानि स्वयमेव नश्यन्ति। भगवतो नित्यगोलोकधाम्नि अनन्तकालं यावत् रमते। इति दिक्।।

***सहायकग्रन्थाः*** : १.हरिभक्तिरसामृतसिन्धुः २.श्रीमद्भगवद्गीता
३.यात्राभागवतम्, ४.ब्रह्ममहापुराणम्

***

*अतिथि–अध्यापकः*
*पुराणेतिहास–विभागः, श्रीसदाशिवपरिसरः,पुरी, उत्कलाः*

# विद्यावतां भागवते परीक्षा



सुश्रीसङ्गीतादाशः
शोधच्छात्री

श्रीमद्भागवतं नाम भगवता व्यासकृतं प्रथिततमं पुराणम्। एतद्भागवतं नाम परमं ज्योतिः। विद्योतयति चैतद् ज्योतिः सचेतसां चेतांसि, अपहरति मलं मलदूषितानां मलिनात्मनाम्, जागरयति चेतसि अध्यात्मदहनम्, प्रबोधयति विवेकम्, शोधयति स्वान्तम्, रोधयति पापततिम्, अवगमयति दर्शनतत्त्वम्, विगमयति दुर्मतिम्, सङ्गमयति च सद्भावसरणीम् ।

समग्रेऽपि पुराणसाहित्ये न तथा पावनं मधुरं चेतः प्रसादजननं विवेकालोकप्रसारकं पुराणमन्यद्यथा श्रीमद्भागवतम्। भागवतं हि ज्ञान-विद्या-प्रसार-समकालमेव अध्यात्मरतिं ब्रह्मनिष्ठां भगवद्भक्तिं सदाचारसरणीं च प्रस्तौतीति धर्मार्थकाममोक्षात्मकस्य चतुर्वर्गस्य साधकमपि निर्णीयते। भगवद्भक्तिम् आश्रित्य कथं जीवनस्य त्राणम् अपवर्गावाप्तिश्चेति अत्रोपदिश्यते। भगवद्भक्तिमूलकं कृतं कर्म न बन्धनकारणम्। भगवद्भक्तिजं ज्ञानं दुःखप्रहाणिं विधाय आत्मतत्त्वावलोकने ब्रह्मरूपता प्राप्तौ च प्रभवति।

श्रीमद्भागवते कथाख्यानादिकम् आश्रित्य क्वचिद् दर्शनम्, क्वचिद् वेदतत्त्वम्, क्वचित् सांख्ययोगसिद्धान्ताः, क्वचिद् वेदान्तराद्धान्ताः, क्वचिद् उपनिषत्तत्वम्, क्वचिद् आत्मज्ञानम्, क्वचिच्च परमा भक्तिः वर्ण्यते। भागवतकर्तुः सर्वविषयावगाहिज्ञानसम्पन्नत्वाद्, विविधकलानिष्णातत्वात्, काव्यशास्त्रनिष्णातत्वात्, आख्यानप्रवणत्वात्, ऐतिह्यविदग्धत्वात् तथा विधं मनोज्ञं वचो यथा न केवलं कोविद-तल्लजानामेव हृदयान्यावर्जयति, अपि तु तद्वचोमाधुरी अल्पधियामपि मनांसि अपूर्वया सङ्गीतात्मकतया रञ्जयति।

यथा महाकविना श्रीहर्षेण स्वीये नैषधीयचरिते महाकाव्ये स्वविषये प्रोच्यते- 'प्राज्ञं मन्यमना हठेन पठितीमास्मिन् खलः खेलतु'। यथा च विविधविषयावगाहित्वेन नैषधीयकाव्यस्य धीनिकषत्वं स्वीकुर्वद्भिः 'नैषधं विद्वदौषधमि'ति सादरमुदीर्यते, तथैव श्रीमद्भागवतविषयेऽपि विदुषामियं सूक्तिः चरितार्था यद्विद्यावतां भागवते परीक्षा इति ।

भागवते प्रतिपदं दर्शनतत्त्वानाम् उपदेशः, शास्त्रीयविषयाणां सुललितया गिरा प्रतिपादनं तस्य महत्त्वं वैशिष्ट्यं वैदुष्यजनकत्वं चापादयति। प्राज्ञं मन्यमना ज्ञानलवदुर्विदग्धो नास्य तत्त्वावगमे प्रभवति। श्रद्धाराद्धगुरुश्लथीकृतदृढग्रन्थिः कश्चित् तत्तच्छास्त्रावगाहेनैव गूढार्थकानां कूटानां च पद्यानामर्थावगमे क्षमः । दिङ्मात्रमिह केचन गूढार्थकाः क्लिष्टार्थकाश्च श्लोकाः प्रस्तूयन्ते। कूटपद्यानि यथा–

अदन्ति चैकं फलमस्य गृध्रा ग्रामेचरा एकमरण्यवासाः ।
हंसा च एकं बहुरूपमिज्यया मायामयं वेद स वेद वेदम् ।। (भाग. ११/१२/२३)



क्लिष्टशब्दप्रयोगोऽपि बहुधा संदृश्यते । तद्यथा (१) मारीचमाशु विशिखेन यथा कमुग्रः । अत्र 'कमुग्रः' इत्यस्यार्थोऽस्ति कम् = दक्षप्रजापतिम्, उग्रः= वीरभद्रः, यथा जघान, तथैव रामो बाणेन मारीचम् अहन् । (२) 'विश्रवसोऽवमेहम्'- अत्र 'अवमेहम्'इत्यस्य कुपुत्र इत्यर्थः । (३) 'शाद्वलजेमनम्', 'अजोर्वभिष्टवम्'- अत्र शाद्वलजेमनम्= तृणाच्छन्नभूमौ भोजनम्, अजोर्वभिष्टवम्= ब्रह्मकृता महती स्तुतिः । (४) 'या दोहनेऽवहनने मथनोपलेपप्रेङ्खेङ्खनार्भरुदितोक्षणमार्जनादौ'- अत्रत्या क्लिष्टा पदावलिः स्वयमेव क्लिष्टार्थतां व्यनक्ति ।

दार्शनिकभावोपेतानां श्लोकानां महती संख्या।

तं क्लेशकर्मपरिपाकगुणप्रवाहैरव्याहतानुभवमीश्वरमद्वितीयम् ।
प्राणादिभिः स्वविभवैरूपगूढमन्यो मन्येत सूर्यमिव मेघहिमोपरागैः ।। (भाग. १०/८४/३३)

अत्र क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः, इति योगसूत्रे वर्णितस्य ईश्वरस्य, वेदान्ताभिमतब्रह्मणश्च वर्णनम्। अत्र सतः सद् जायते इति सांख्याभिमतस्य वर्णनम्।–

''दृतय इव श्वसन्त्यसुभृतो यदि तेऽनुविधा,
महदहमादयोऽण्डमसृजन् यदनुग्रहतः ।
पुरुषविधोऽन्वयोऽत्र चरमोऽन्नमयादिषु यः,
सदसतः परं त्वमथ यदेष्ववशेषमृतम् ।।'' (भाग. १०/८७/१७)

अत्र सांख्याभिमतप्रकृतिविकृतेः, अन्नमयादिकोशानाम्, सदसतः परस्य ब्रह्मणश्च वर्णनम्-

''स एव जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः ।
मनोमयं सूक्ष्ममुपेत्य रूपं मात्रा स्वरो वर्ण इति स्थविष्ठः ।।''
(भाग. ११/१२/१७)

अत्र उपनिषदि वर्णितस्य आत्मनो वर्णनम्। अत्र ब्रह्मणः परादिरूप-चतुर्विधाया वाण्याः प्रवर्तनं वह्निदृष्टान्तेन स्फुटीक्रियते ।

सत्त्वं रजस्तम इति गुणा बुद्धेर्न चात्मनः ।
सत्त्वेनान्यतमौ हन्यात् सत्त्वं सत्त्वेन चैव हि ।। (भाग. ११/१३/१)

अत्र गुणाः बुद्धिधर्माः नात्मन इति सांख्याभिमतं वर्ण्यते ।

आगमोऽपः प्रजा देशः कालः कर्म च जन्म च ।
ध्यानं मन्त्रोऽथ संस्कारो दशैते गुणहेतवः ।। (भाग. ११/१३/४)

अत्र दशतत्त्वानां गुणबुद्धिहेतुत्वं प्रदर्श्यते ।

वेणुसंघर्षजो वह्निर्दग्ध्वा शाम्यति तद्वनम् ।

एवं गुणव्यत्ययजो देहः शाम्यति तत्क्रियः ।। (भाग.११/१३/७)

अत्र 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा' (गीता ४/३७) इति समर्थ्यते। स्मारयति चैतत् पद्यम् अश्वघोषकृतं पद्यद्वयम्– 'दीपो यथा निर्वृत्तिमभ्युपेतो स्नेहक्षयात् केवलमेति शान्तिम्' । 'एवं कृतिनिर्वृत्तिमभ्युपेतो नैवावनिं गच्छति नान्तरिक्षम् । दिशं न काञ्चिद् विदिशं न काञ्चिद् क्लेशक्षयात् केवलमेति शान्तिम्'।

योऽसौ गुणक्षोभकृतो विकारः प्रधानमूलान्महतः प्रसूतः ।

अहं त्रिवृन्मोहविकल्पहेतुर्वैकारिकस्तामस ऐन्द्रियश्च ।। (भाग.११/१२/३२)

अत्र सांख्यवेदान्तोभयसिद्धान्तानां वर्णनम्।

न स्वप्नजाग्रन्न च तत्सुषुप्तं न खं जलं भूरनिलोऽग्निरर्कः ।

संसुप्तवच्छून्यवदप्रतर्क्यं तन्मूलभूतं पदमामनन्ति ।। (भाग.१२/४/२१)

अत्र सांख्याभिमतम् अव्यक्तायाः मूलप्रकृतेः वर्णनम् ।

आत्मा ज्ञानमयः शुद्धो व्यतिरिक्तोऽगुणान्वयः ।

सुषुप्तिस्वप्नजाग्रद्भिर्मायावृत्तिभिरीयते ।। (भाग.१०/४७/३१)

अत्र सांख्यशास्त्रस्य दृढनौकारूपेण प्रशंसनम् ।

प्रशान्तमायागुणकर्मलिङ्गमनामरूपं सदसद्विमुक्तम् ।

ज्ञानोपदेशाय गृहीतदेहं नमामहे त्वां पुरुषं पुराणम् ।। (भाग. ९/८/२५)

अत्र वेदान्ताभिमतस्य त्रिगुणातीतस्य ब्रह्मणो वर्णनम्। एवं विवेचनेन भागवतस्य गुणगौरवं भावोत्कर्षश्च च नितरां प्रतीयते। सत्यमिदं वचनम्–

श्रीमद्भागवतं पुराणममलं यद्वैष्णवानां प्रियं

यस्मिन् पारमहंस्यमेकममलं ज्ञानं परं गीयते ।

तत्र ज्ञान-विरागभक्तिसहितं नैष्कर्म्यमाविष्कृतं

तच्छृण्वन् विपठन् विचारणपरो भक्त्या विमुच्येन्नरः ।।

एवंरूपेण श्रीमद्भागवते विविधदर्शनशास्त्रीयस्रोतः समुपलभ्यते। विविधदर्शनतत्त्वमजानन् कोऽपि श्रीमद्भागवतं तत्त्वं ज्ञातुं न पारयति। अतः साधूक्तं विद्यावतां भागवते परीक्षा यथा–

धनञ्जये हाटकसंपरीक्षा महारणे शस्त्रभृतां परीक्षा ।

विपत्तिकाले गृहिणीपरीक्षा विद्यावतां भागवते परीक्षा ।।

***



# श्रीजगन्नाथस्य महत्त्वम्

*श्रीवापिसाहुः*
*शोधच्छात्रः*

**अपारे संसारे विविधविपदां नित्यनिलये**

**भृशं तप्तान् द्रष्टुं नयनयुगलं पक्ष्मरहितम् ।**

**समुद्धर्तुं बाहु धरसि न हि शिष्टानवयवान्**

**जगन्नाथ !त्वं मे गतिरगतिकस्यासि भगवन् ।।**

अस्माकं राष्ट्रं भारतम् । अस्माकं संस्कृतिः भरतीयासंस्कृतिः । सा च सर्वात्मना संस्कृताश्रिता वर्त्तते । भारतीयासंस्कृतिः इति कथनेन सामान्यतः हिन्दुसंस्कृतिः सद्यः बुद्धिमारोहति अस्माकम्। एषा हिन्दुसंस्कृतिः मुख्यतः चतुर्धा विभक्ता अस्ति। तद्यथा –वेदपूर्ववर्त्ती अनार्याणां मूलसंस्कृतिः ,आर्यैः प्रतिष्ठापिता वैदिकीसंस्कृतिः,वेदविरोधीनी जैनबौद्धादिसंस्कृतिः वेदोत्तरवर्त्ती पौराणिकी संस्कृतिः चेति। परन्तु इतोऽपि सूक्ष्मेक्षकिया यदि विचारयामः तर्हि अस्माकं पुरः प्रतिभाति अतिविलक्षणा मूलभूता अन्या संस्कृतिः काचित् सा भवति जगन्नाथः संस्कृतिः। "**सर्वं ब्रह्ममयं जगत्**" इति मन्त्रं भवति एतस्याः मूलतत्त्वम्। एतस्यां संस्कृतौ पण्डितात् पामरपर्यन्तं सर्वे समानाः भवन्ति। विश्वेऽस्मिन्विद्यमानान् जनानाम् आराध्यो भवति जगन्नाथः।

अस्माकं हिन्दुपरम्परायां मूर्त्तिपूजायाः आरम्भः प्रप्रथमं कदा आभवदिति विषये ख्रीष्टपूर्वपञ्चमशतकतः मूर्त्तिपूजा आरब्धा इति विद्वांसः अभिप्रयन्ति। अस्माकं सम्प्रदाये देवस्य अर्च्चनार्थम् आरधनार्थं वा निश्चितमेकं स्थानं भवति। तत् स्थानमेव देवस्थानं,मन्दिरम्,इति पदैःव्यपदिश्यते। अत एव लौकिकाः वयं वेङ्कटेश्वरमन्दिरम्, रामेश्वरमन्दिरम्, जगन्नाथमन्दिरम्, लिङ्गराजमन्दिरम्, नटराजमन्दिरम्, इत्यादिव्यवहारं कुर्वन्तः भवामः।

जगन्नाथमन्दिरस्य निर्माणसमयः कः ? कुत्र तस्यमन्दिरस्य स्थानम् ? कस्य राज्ञः शासनकाले मन्दिरस्य निर्माणमभवत्। मन्दिरस्य ऐतिह्यं किम् ? श्रीजगन्नाथमन्दिरस्य निर्माणसमयसन्दर्भे अद्यावधिः इदमित्थमिति निर्णयः जनानां पुरतः नागतः यद्यपि तथापि सार्द्धैकशतवर्षतःमन्दिरस्य समयविषये इतिहासकाराः मतानि प्रकटयन्तः सन्ति, विविधाः किम्बदन्त्यः,आख्यायिकाः पुराणवचनानि च यथेष्टं समुपलभ्यन्ते। तत्राद्यः ष्टर्लिँ महोदयः ओडिशाइतिहासपुस्तकस्य "राजवंशावली" इति मन्दिरविषये लिखितस्य "मादलापञ्जिकायाः" च आधारेण सम्प्रति विद्यमानस्य श्रीजगन्नाथमन्दिरस्य निर्माणसमयः 1196 A.D इति अनङ्गभीमदेवस्य शासनकाले आसीत् इति निरूपयति। किन्तु श्रीजगन्नाथमन्दिरस्य निर्माणकार्यारम्भः श्रीचोडगङ्गदेवमहोदयेन 1078-1147A.Dमध्ये कृतः। तस्य पौत्रेण

अनङ्गभीमदेवमहोदयेन 1211-1238 A.D मध्ये निर्माणकार्यं समाप्तं नीतम् इति इतिहासकारा: निगदन्ति ।

श्रीजगन्नाथमन्दिरस्य निर्माणविषये उत्कलस्य सर्वे इतिहासकारा:एवं प्रतिपादयन्ति यत् परमहंसवाजपेयीमहोदयस्य तत्त्वावधाने धनं व्ययीकृत्य ११९७ ख्रीष्टाब्दे एतस्य भव्यमहामन्दिरस्य निर्माणमकरोत् इति। परन्तु गुरुदाससरकारद्वारा रचिते "मन्दिरकथा(बङ्गला)" प्रथमभागे पुस्तके एवमुल्लखितम्।

(वङ्गला)"प्रथमभागे (वङ्गला)"प्रथमभागे प्रथ

***

## श्रीजगन्नाथस्य लीलावर्णनम्

*इतिप्रभा पाइकराय:*

**यो द्वेधा प्रकृतिः पुमानितिमतः स्त्रीपुंसदेहाश्रितो**
**यस्त्रेधा विधिविष्णुशङ्करवपुर्धारिदरीदृश्यते।**
**श्रीमन्नीलगिरौ दारुतनुधृक् योऽसौ चतुर्धास्थितः**
**राधाकृष्णवपुर्धरो विजयते वृन्दावने स प्रभुः ।।**

नीलाद्रिनाथ: अनादिप्रपन्नार्तिच्छिदनन्तब्रह्मस्वरूप: श्रीजगन्नाथ: भारतीयसंस्कृते: अनन्यप्रतीक:। भारते विद्यमानेषु चतुर्षु क्षेत्रेषु उत्कलप्रान्ते विद्यमानस्य श्रीक्षेत्रस्य वैशिष्ट्यं माहात्म्यञ्च परिलक्ष्यते एव। तस्मिन् क्षेत्रे श्रीमन्दिरे अनुसृयमाणेषु विविधविधानेषु नवकलेवरस्यापि वैशिष्ट्यं सर्वजनविदितम्। भगवतो नवकलेवर: किमिति जिज्ञासायामुच्यते "श्रीमद्भगवद्गीतायां" यथा–

वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोपराणि ।
तथा शरीराणि विहाय जीर्णा–
न्यन्यानि संयाति नवानि देही ।। इति ।

*अर्थात् यथा मनुष्य:* पुरातनवस्त्रपरित्यागपूर्वकं नूतनवस्त्रं विभर्ति तथैव जीवात्मा पुरातनशरीरं *परित्यज्य शरीरान्तरं गच्छति*। एवमेव भगवत: श्रीजगन्नाथस्य प्राचीनविग्रहपरिवर्त्तनं नूतनविग्रहसंस्थापनं *प्राचीनविग्रहे विद्यमानं* ब्रह्मस्थानीयं प्रतीकरूपं तस्मान्निष्कास्य नूतनविग्रहे स्थापनं नवकललेवर इति *जना: अवगच्छन्ति* । परिवर्त्तितप्राचीनविग्रह: श्रीमन्दिरपरिसरमध्यस्थोत्तरपश्चिमकोणे विद्यमाने "कोइलिवैकुण्ठ" नाम्नि स्थाने भूमौ गर्ते निक्षिप्यिते। तस्मिन् गर्तस्थाने १५मि० दैर्घ्य–१५मि०



प्रस्थ– १०मि० गभीरताविशिष्टे गोलके गृहे रक्तवस्त्राच्छादितं पृथक् पृथक् शय्यात्रयं निर्माय बलभद्रसुभद्राजगन्नाथानां मूर्त्तिनां च क्रमेण उत्तरदिशि शिरांसि संस्थापनपूर्वकं निक्षिप्यन्ते। त्रिमूर्त्तिनां पाददेशे तत्तद्रथे व्यवहृता: रथचालक– अश्व– द्वारपाल –पार्शदेवता: विधिपूर्वकमवस्थाप्य मृत्तिकया आच्छाद्यते । अत्रैषां या परम्परा परिलक्षते तया सह हरप्पा– महेञ्जोदारयो:श्मशानसभ्यताया: सादृश्यमवगम्यते ।

### नवकलेवरस्यैतिहासिकलीला समीक्षणम्

यद्यपि पूर्वोक्तविधिना नवकलेवर: श्रीक्षेत्रे परिपाल्यते परन्तु ऐतिहासिकदृष्ट्या एतस्य वस्तुस्थिति: अन्यद्रूपेण परिलक्षते। विग्रहाणां कलेवर: दारुणा निर्मितमिति कारणात् कालक्रमेण क्षयमाप्नोत्यत: आवश्यकतानुसारेण विग्रहाणां परिवर्त्तनम् अनिवार्यम्। विग्रहाणां निर्माणं निम्बवृक्षेणैव भवति। अपि च निम्बकाष्ठ: तिक्तरसयुक्त इति कारणात् कीटदंशो न भवति । अत: नवकलेवरसमये निम्बकाष्ठेनैव विग्रहाणां निर्माणं क्रियते। नवकलेवरस्य या परम्परा सम्प्रति विद्यते सा अदिवासिजनानां प्रचीना परम्परा इति केचन विमर्शका: आमनन्ति । तथा हि –जगन्नाथ: आदिवासिजनानां देवता । आदिवासिषु वृक्षस्य स्तम्भस्य वा उपासना आसीत् अस्ति च । सा अद्यत्वे जगन्नाथस्योपासनारूपेण परिणता विद्यते । आदिवासिजना: प्राक् वृक्षस्य पूजाम् अकुर्वन् । तत: परं वृक्षपूजा स्तम्भपूजारूपेण समारब्धा । भोजनान्वेषणं स्थानपरिवर्त्तनञ्च कुर्वन्त: यायावरा: विशिष्टसंकेतै: परिपूर्णं वृक्षं स्वपार्श्वे संस्थाप्य तत्र तत्र न्यवसन्। पूजाया: सौविध्यकारणेन वृक्षपूजा स्तम्भपूजारूपेण परिवर्त्तिता । काष्ठकर्त्तनं कृत्वा स्तम्भोपासना अद्य दारुमूर्त्तिरूपेण परिवर्त्तिता वर्त्तते । उपासनाया: पूर्वोक्तप्रकारेण परिवर्त्तितेऽपि आदिवासिजना: वृक्षस्योपासनां नैव अत्यजन् । तस्मिन् समये उपासनायोग्यस्य कस्यचन बृक्षस्य चयनं कृत्वा तत्रैव न्यवसन्त: आसन्। अधुना भगवतो जगन्नाथस्य वृक्षचयने या पद्धति: अवलम्बते सा पद्धति: प्राचीनकालादासीदिति ज्ञायते ।

### रथयात्राया: ऐतिहासिकं समीक्षणम्

श्रीजगन्नाथक्षेत्रे परिपालितासु बह्वीसु यात्रासु रथयात्राया: महत्त्वमलौकिकं सर्वश्रेष्ठञ्च वर्त्तते । दशम–एकादशशतकयोरन्तराले मुरारिमिश्रेण विरचिते अनर्घराघवे वर्णिते पुरुषोत्तमक्षत्रे वर्णिता यात्रा रथयात्रा इति गवेषका: आमनन्ति। स्कन्दपुराणाख्ये (पुरुषोत्तममाहात्म्ये) ग्रन्थे जगन्नाथस्य रथयात्राया: सर्वश्रेष्ठ: उल्लेख: अवलोक्यते। श्रीजगन्नाथस्य रथयात्राया: प्रारम्भ: कदा जात: इत्यस्मिन् विषये डा.सत्यनारायणराजगुरुनाम्ना पण्डितेन इत्थमुच्यते–

तृतीयस्य अनङ्गभीमदेवस्य राज्यकाले १२३०तमे वर्षे इदानीमवलोक्यमानस्य मन्दिरस्य प्रतिष्ठा जाता । तदानीं हस्तपादयुक्तमूर्त्तित्रयाणां विग्रह: प्रस्तरनिर्मित: आसीदिति अभिप्राय:।

तदानीं काष्ठेनैव मूर्त्तीनां निर्माणमासीत् । ततः प्रारभ्य जगन्नाथमन्दिरे रथयात्रायाः प्रारम्भः आसीदिति केचित् वदन्ति । केचन गवेषकाः वदन्ति श्रीजगन्नाथस्य रथयात्रा बौद्धपरम्परातः प्रारब्धा इति जगन्नाथस्य काष्ठमूर्त्तिनिर्माणानन्तरं बौद्धप्रथानुसारं तेषां स्नानयात्रा –रथयात्राप्रभृतयः प्रारब्धाः। स्नानयात्रातः प्रारभ्य रथयात्रायाः अन्तिमदिनं यावत् जगन्नाथस्य सेवादिकार्यं **दइता** इति सेवकहस्ते न्यस्तं भवति सिंहलदेशे या रथयात्रा भवति स्म । तदानीं तत्र बुद्धस्य दन्तान् वैशाखशुक्लत्रयोदशीदिवसे बहिरानीय हस्तिनः उपरि च संस्थाप्य शोभायात्रा क्रियते । सुदूरं चैत्यात् एकस्मिन् मण्डपे षट् दिनानि स्थापयित्वा पुनः तस्मिन्नेव चैत्ये स्थापयन्ति । एवमेव पुर्याम् आषाढशुक्लपक्षद्वितीयातिथौ भगवान् जगन्नाथः काष्ठनिर्मितरथे उपविश्य राजमार्गञ्च अतिक्रम्य अष्टदिनानन्तरं मन्दिरं पुनः प्रत्यागच्छति।

चीनदेशस्य परिब्राजकः ह्वेन् सां प्रथमशतके पाटलीपुत्रे बुद्धस्य मूर्त्तिः रथे उपविश्य नीयमानां ददर्श इति ऐतिहासिकाः कथयन्ति । तेषां मते रथयात्रा बुद्धदेवजन्मोत्सवपालनस्य स्मृतिमात्रम् । अनेनानुमीयते यत् पुरीरथयात्रायाः साम्यमस्तीति । तस्मादेव कालादारभ्य अद्यावधिः भगवतः जगन्नाथबलभद्रसुभद्राणां रथयात्रा समनुष्ठीयते प्रतिवर्षम् । तादृशः जगन्नाथस्वामि मम नयनपथगामि भवतु इति सम्प्रार्थये।

***

# जगतः आधारः श्रीजगन्नाथः



*ज्योतिर्मयी साहुः*
*शोधच्छात्रा*

उत्कलप्रदेशस्य आराध्यदेवः तथा ओडिआजातेः सर्वश्रेष्ठपरिचयः पुरुषोत्तम–आनन्दकन्दश्रीजगन्नाथः। जगन्नाथसंस्कृतिः उत्कलीयसंस्कृतेः परम्परायाश्च भित्तिभूमिः। तं विना उत्कलस्य इतिहासः असम्पूर्णः। बहुषु पुराणेषु जगन्नाथस्य महिमा–पूजापद्धतिविषये वर्णितं विद्यते । तेषु पुराणेषु स्कन्दपुराणम् अन्यतमम् । स्कन्दपुराणस्य वैष्णवखण्डे जगन्नाथदेवस्य महिमाविषये पूर्णरूपेण आलोचितोऽस्ति ।

स्कन्दपुराणस्य वैष्णवखण्डस्य पुरुषोत्तमक्षेत्रे अनन्तकोटिब्रह्माण्डजननायकस्य जगदाधारस्य सर्वकलुषनाशनश्रीजगन्नाथस्य रहस्यं प्रतिपादितम् ।



**तिष्ठन्नब्दसहस्त्रं वै तदन्ते लोपयिष्यति ।**
**समस्तजगदाधारं सर्वकलुषनाशनम् ।।**

स एव जगन्नाथः समग्रजगतः आत्मा कैवल्यस्वरूपं च ।

**पुरोधसा समं पूर्वमर्चयासास ऋद्धिमत् ।**
**विनीतो दीनवत्तस्य चक्रे पूजां तथा नृपः ।।**

ब्रह्माण्डेश्वरः वेदनिःश्वासधारकः परमपुरुषजगन्नाथः अशेषजगदाधारः भवति। तद्यथा –

**जय ब्रह्माण्डकोटीश वेदिनः श्वासधारक ।**
**अशेषजगदाधारः परमात्मन्नमोऽस्तुते ।।**

अयमेव चराचरवन्द्यः सृष्टिसंहारहेतुः नारायणः सृष्ट्यादिकर्मसम्पादकः स्वप्रकाशकश्च ।

**चराचरसहावन्द्यचरणं तं परायणम् ।**
**नारायणं जगद्योनिं सृष्टिसंहृतिकारणम् ।।**
**जगत्कारणं सृष्ट्यादिकर्मकृत् गुणभेदतः ।**
**मायया निजया गुप्तः स्वप्रकाशः नमोऽस्तुते ।।**

अयमेव अन्नमयः जगताम् आदिनारायणः दारुवपुः जगन्नाथः सर्वभूतानां स्रष्टाऽस्ति । तस्य महिमा अवर्णनीयः। यत् –

**यस्त्वं ससर्ज भूतानि जगतामादिकारणम् ।**
**अचिन्त्यमहिमन् विष्णो नारायण नमोऽस्तुते ।।**

श्रीजगन्नाथः प्रपन्नमृत्युनाशकः सहजानन्दरूपी भक्तप्रियः जगतां माता पिता च इति ।

**प्रपन्नमृत्युनाशाय सहजानन्दरूपिणे ।**
**भक्तप्रियाय जगतां मात्रे पित्रे नमो नमः ।।**

स समग्रजगतां साक्षात् एव कल्पवृक्षः। अतः सैव आश्रयणीयः। अयं कल्पवृक्षः महाप्रलयकालेऽपि तथैव तिष्ठति स्म।

**नमोऽस्त्वव्यक्तरूपाय महाप्रलयस्थायिने ।**
**एकाश्रयाय जगतां कल्पवृक्षाय ते नमः ।।**

समग्रजगतः मंगलहेतुः अयं देवदेवेशः वासुदेवजगन्नाथः सर्वदा सर्वैः पूजनीयः।

**ततः पञ्चामृतेनैव वासुदेवं समुच्चरन् ।**
**स्नापयेद्देवदेवेशं जगन्मङ्गलकारणम् ।।**

सर्वप्राणिनाम् अयं धारकः सर्वभाषाणां भाषकः, सर्वदुष्कृतानां नाशकः । यथा–

**भरणं सर्वजन्तूनां धरणं जगतामपि ।**

**भाषणं सर्वभाषाणां दूषणं सर्वदुष्कृताम् ।।**

अयं देवेश्वरश्रीजगन्नाथः चन्द्रसूर्यादिरूपेण जगदिदं प्रकाशयते ।

**नमस्ते देवदेवाय त्रयीरूपाय ते नमः ।**

**चन्द्रसूर्यादरूपेण जगद्भासयते सदा ।।**

नित्यशुद्धः शुभरूपी मायाधीशः जगन्नाथः समग्रविश्वब्रह्माण्डस्य साक्षी भवति ।

**निर्मलाय स्वरूपाय शुभरूपाय मायिने ।**

**सर्व सङ्गविहीनाय नमस्ते विश्वसाक्षिणे ।।**

***

## पुराणे श्राद्धस्योपयुक्तपात्राणि



*अर्पिता मिश्रः*

*आचार्यद्वितीयवर्षम्*

आत्मकल्याणाय मनुष्यः इह नानाविधानि कर्माणि कुरुते। तेषु नाना प्रकारेषु कर्मसु पंचयज्ञाः सन्ति सर्वश्रेष्ठाः। ते यज्ञाः यथा – देवयज्ञः,पितृयज्ञः,नृयज्ञः,ब्रह्मयज्ञः ऋषियज्ञः, भूतयज्ञश्च। एतेषु पंचयज्ञेषु पितृयज्ञः सर्वतोऽधिकः श्रेष्ठ इति शास्त्रेषु प्रतिपादितोऽस्ति। पितृयज्ञः नाम मृताहदिवसे पितृभ्यः पितृन् उदिश्य वा यानि जलतिलानि श्रद्धया दीयते, तदेव कर्म श्राद्ध इति उच्यते। **मनुना स्पष्टमुक्तं पितृयज्ञस्तु तर्पणम्।** पुराणेषु पितृयज्ञस्वरूपं कथमस्ति तत्र केषां निमन्त्रणं भवेत् तन्मयाधः विचार्यते। पितृयज्ञः पार्वणएकोद्दिष्टभेदेन द्विधाविभक्तोऽस्ति परं मत्स्यमहापुराणे श्राद्धः त्रिविधः इति उक्तोऽस्ति तत्यथा –**पयोमूलफलैर्वापि पितृभ्यःप्रीतिमावहन्।**

**नित्यन्नैमित्तिकं काम्यं त्रिविधं श्राद्धमुच्यते।। मत्स्य० १६/४**

एकोद्दिष्टे एकमेव पितरमुदिश्य पिण्डदानं क्रियते। परं पार्वणे श्राद्धे पितृपितामहप्रपितामहेभ्यः पिण्डदानं क्रियते। अस्मिन् श्राद्धे कर्तृणामुपभोक्तृणां ब्राह्मणानां च किं वा लक्षणं भवेत् मया अधः शास्त्रदृष्ट्या विचार्यते।



यः पुरुषः श्रोत्रीयः योगी वेदवित् नचिकेताप्रणीतोपनिषदामुपासकः षडङ्गवित् अस्ति स श्राद्धे निमन्त्रणीयः अपि च श्राद्धे दौहित्रः ऋत्विक् जामाता, श्वसुरादयः निमन्त्रिताः भवन्ति। पञ्चाग्न्युपासकाः ब्राह्मणाः श्रौतकर्माणि लग्नाः कुर्युः। दानग्रहणार्थं द्विजाश्च श्राद्धे श्रेष्ठाः भवन्ति। ये चापि पुरुषाः मातरि पितरि श्रद्धाशीलाः तेऽपि श्राद्धे श्रेष्ठपात्रत्वेन गणिताः भवन्ति ।

श्राद्धस्य पूर्वस्मिन् दिवसे पूर्वोक्तब्राह्मणश्रेष्ठान् निमन्त्रयित्वा देवकार्ये तथा पितृकार्ये तेषां वरणं कुर्यात्। यः श्राद्धस्यानुष्ठानं करोति समयपूर्वकं,एतादृशं ब्राह्मणं श्राद्धकार्ये नियोजयेत्। समयानुसारेण भिक्षार्थमभ्यागतं सन्यासिनं प्रणामपूर्वकं प्रसन्नं कृत्वा संयमचेतसा भोजनं कारयेत्। पितृणामपराह्नकालः प्रियः भवति अतः पूर्वाह्नापेक्षया अपराह्नसमये ब्राह्मणस्य स्वागतं कृत्वा उत्तमरूपेण तमर्च्चयेत् ।

पितृकार्ये अयुग्मान् तथा देवकार्ये युग्मब्राह्मणश्रेष्ठान् वरयेत्। असमर्थः चेत् स्वसामर्थ्यानुसारेण एकमपि ब्राह्मणवरणं कुर्यात्। मातामहस्य पक्षेऽपि एवं प्रकारेण विधिनिर्दिष्टो भवति। पुनश्च पूर्वमुखी भूत्वा देवकार्यं कुर्यात्। दक्षिणमुखः सन् पितृकार्यं कुर्यात्। शास्त्रेषु मनीषिभिः यो विधिः निरूपितः तेनैव विधिना ब्राह्मणाय आसनप्रदानं कृत्वा कुशलप्रश्नं कुर्यात्। अर्घ्यादिना ब्राह्मणं संपूज्य पुनः पवित्रादीन् तस्मै समर्प्य तस्य ब्राह्मणस्याज्ञां गृहीत्वा मन्त्रपाठसहितेन देवानामावाहनं कुर्यात्। यवसंयुक्तजलेन विश्वदेवेभ्यः अर्घ्यप्रदानपूर्वकं गन्धमाल्यधूपदीपं प्रदाय जलदानं च कृत्वा दक्षिणस्यां दिशि पितृणां समस्तकार्यसम्पादनं कुर्यात्। तदनन्तरं द्विगुणदर्भप्रदानपूर्वकं तस्य ब्राह्मणस्य आज्ञया मन्त्रोच्चारणपूर्वकं पितृणामावाहनं कर्तव्यम्। अस्मिन्नेव समये पितृणाप्रीतिविधानाय अपसव्यो भवेत् दक्षिणदिशि विधिपूर्वकं तिलयुक्तमर्घ्यप्रदानं कुर्यात्। अनन्तरं ब्राह्मणानामाज्ञानुसारेण अग्निकार्यं कुर्यात्। अग्नौ विधानानुसारेण व्यञ्जनं दुग्धसहितमन्नम् आहुतिं च दद्यात् । "अग्नये कव्यवाहनाय स्वाहा" अर्थात् यः कव्यं वहति तम् अग्निं प्रसन्नकर्तुमहमन्नप्रदानं करोमि ।

पुनः "सोमाय पितृमते स्वाहाः" इति उच्चार्य्य द्वितीयाहूतिं दद्यात्। तदनन्तरं " यमाय प्रेतपतये स्वाहा" इति उच्चार्य्य तृतीयाहुतिं दद्यात्। हूतावशिष्टं यत् अन्नं तत् ब्राह्मणपात्रे प्रदातव्यम्। तथा च तस्मिन् एव समये मधुरवचनेन अन्नमिदं भोजनं कुर्यात् । यत् अन्नं ब्राह्मणस्य प्रियं भवति तत् लोभपरित्यागपूर्वकं शनैः शनैः यथा सम्भवं प्रलोभितं कृत्वा तस्मै प्रदातव्यम्। अनन्तरं रक्षोघ्नमन्त्रं जप्त्वा भूमौ तिलान् विकिरेत्। यतः श्राद्धः स्वतः तिलैः परिपूर्णः भवति। अनन्तरं भवानत तृष्टितृप्तिजनकमन्नं भोजनं कृत्वा तृप्ताः स्म इति उत्क्वा ब्राह्मणोऽपि तृप्ताः स्म इति वदेत्। तस्य आज्ञानुसारेण भूमौ सर्वत्र अन्नं विकिरेत् पुनः आचमनार्थं विधानपूर्वकमेकवारं जलप्रदानं कुर्यात्। पुनः आज्ञां प्राप्य संयतेन मनसा तिलेन सह अन्नेन पिण्डं कृत्वा पितृनुद्दिश्य दक्षिणस्यां दिशि कुशोपरि पिण्डार्पणं कुर्यात्। पुनः भक्तिपूर्वकं पितृतीर्थेन जलं दद्यात्। तदवत् मातामहेभ्यः पिण्डं दत्वा

विधानपूर्वकं गन्धमाल्यपुष्पाणि प्रयच्छन् आचमनं प्रदातव्यम् । अनन्तरं स्वसामर्थ्यानुसारेण दक्षिणां दत्वा सुश्वधारतु इत्यादि मन्त्राणां पाठं कारयित्वा हे विश्वदेवाः ! भवन्तः सन्तुष्टाः भवन्तु। मङ्गलं भवतु इत्यादि वैश्वदैविकमन्त्रपाठं कारयित्वा ब्राह्मणसविधे आशिर्वादप्रार्थनां कुर्यात्, पुनः भक्त्याप्रणम्य द्वारदेशपर्यन्तं तमनुगच्छेत् ततः विसर्जनं च कुर्यात्। अनन्तरं नित्यकर्माणि कृत्वा अतिथिभ्यो भोजनं दद्यात् ।

***

## सकलसौन्दर्यस्याधारः श्रीकृष्णः



***बेबिलाल गुप्ता***

***आचार्यप्रथमवर्षम्***

श्रीमद् गर्गसंहितायां श्रीकृष्णः अलौकिकसौन्दर्यस्याधारः लावण्यनिधिरूपेणाभिहितः। अनन्तसौन्दर्यस्य निदानभूतः तस्य दिव्यविग्रहः समस्तसौभाग्यलक्ष्म्याः आश्रयरूपः । तस्य सुललिताङ्गप्रत्यङ्गानि दिव्यभूषणैश्च सुशोभितानि ।

गर्गसंहितायामनेकेषु स्थलेषु भगवतः श्रीकृष्णस्य अपूर्वसौन्दर्यस्य वर्णनं समुपलभ्यते। गोलोकखण्डे वर्णितमस्ति यत् भुवः भारावताराय ब्रह्माविष्णुमहेशादयः सर्वे देवाः श्रीकृष्णदर्शनाय गोलकं जग्मुः । दिव्यगोलोके अतीवकमनीयं घनप्रभं पद्मदलायतेक्षणं मन्दहासं वंशीधरं सुन्दरं पीतवाससं काञ्चीकलाकङ्कणनूपुरद्युति श्रीवत्सरत्नोत्तमकुन्तलश्रियं किरीटहाराङ्गदकुण्डलत्विषं वृन्दावनोन्मत्तोन्मिलिन्दशब्दैर्विराजितवनमालया युक्तं भूमण्डल-मोहितकामरशिस्वच्छन्दवक्रीकृतदक्षिणाङ्घ्रिं राधिकालङ्कृतवामवाहुं श्रीकृष्णं विलोक्य सर्वे देवाः विसिस्मिरे ।

वृन्दावनखण्डे गोपीनामतिप्रियस्य भगवतः श्रीकृष्णस्य गोपवेषसौन्दर्यस्य चारुचित्रं प्रदत्तम् । वृन्दावने मनोहरे कृष्णातीरे पीतवासपरिकरो नटवेषः मनोहरो वेत्रभृत् श्रीकृष्णो गोपीनां प्रीतिमावहन् वंशीरागैः समीरयन् वनाद् वनान्तरं भ्रमति स्म । पङ्कजपत्रनेत्रो गोरजोभिनिर्लिप्तः कुन्तलामादधानो हेमाङ्गुदीमौलिविराजमानः आकर्णवक्री-कृतदृष्टिवाणो गोधूलिभिर्मण्डितकुन्दहारः कर्णोपरि स्फुर्जितकर्णिकारः पीताम्बरो वेणुनिनादकारः श्रीकृष्णः सकलसौन्दर्यस्याधारभूतः । श्रीमद्भागवते वर्णितमस्ति-

**वर्हापीडं नाटवरवपुः कर्णयोः कर्णिकारं**
**विभ्रद् वासः कनककपिशं वैजयन्ती च माला ।**



**रन्ध्रान् वेणोरधरसुधया पूरयन् गोपवृन्दैः**
**वृन्दारण्यं स्वपदरमणं प्राविशद् गीतकीर्तिः ।।** (भा. १०/२१/५)

श्रीसंहितायां भगवतः दिव्यकान्तियुक्तानां समस्तानाम् अङ्गप्रत्यङ्गानामतीव सुन्दरवर्णनं समुपलभ्यते । संहितायाः विश्वजित्खण्डे भगवतः श्रीकृष्णस्य ध्यानवर्णनप्रसङ्गे भगवतः श्रीकृष्णस्य सुललितानाम् अङ्गप्रत्यङ्गानां वर्णनं समुपलभ्यते । भगवतः पादपद्मं कीदृशं यत् शरद्धिकचपङ्कजश्रियमतीवविद्वेषकं, मिलिदं मुनिलेढितं कुलिशकञ्जचिह्नावृत्तं स्फुरत्कनकनूपुरं दलितभक्ततापत्रयम्, चलितद्युतिसम्पन्नञ्च भगवतः जानुद्वयमतीव सुन्दरम्, यं लक्ष्मीः स्वाङ्के संस्थाप्य करकमलाभ्यां सततमामृशति । रम्भाखण्डे हेमस्तम्भसदृशे ओजःपूर्णे शोभायुक्ते पीतवस्त्रान्विते भगवतः श्रीकृष्णस्य उरुणी । केशक्षीणो मन्दसमीरैः दोलायमानः । भगवतः कटिप्रदेशः अतीवशोभायुक्तः । भगवतो नाभिप्रदेशः सरोवर-सदृशः यः त्रिवलिभिः च शोभितः, कामकाननप्राज्झितस्य रोमावलिभिश्च संयुक्तः । इन्द्रधनुरिव दीप्तियुक्तं काञ्चनशिल्पैर्खचितम् अतीवमनोहरं भगवतः पीतवस्त्रम् । अरुणबिम्बफलद्युतिमण्डितः कान्तियुक्तः भगवतोऽधरः । परस्य श्रीकृष्णस्य दन्तपङ्क्तयः कर्पूरकेतकसुमौक्तिकहीरकाणां श्रीखण्डबालामृतमल्लीकानां श्रियं पराभवन्ति । सर्वलावण्यदीक्ष्यं परिहृतसुरवृक्षं दानदक्षं कटाक्षयुक्तं भगवतः नयनयुगलम् । भगवतः श्रीकृष्णस्य चन्द्रमुखे भ्रूयुगलं जगद्विजयार्थमुद्यतं मकरध्वजस्य जैत्रधनुद्वयम् । विकसितकमलमिव भगवतः मुखमण्डलं बिम्बफलसदृशः भगवतोऽधरः । कीरसदृशी भगवतः नासिका ।

कोटिकन्दर्पलावण्ययुक्तः भगवान् श्रीकृष्णः संहितायां सकलसौन्दर्यस्याधाररूपेणा-भिहितः । रुक्मिणीस्वयंवरे तं श्रीकृष्णं द्रष्टुं कुण्डिनपुरवासिन आकुलिताः अभवन् । पुनश्चानन्तरं तस्य परं मुखाम्बुजं ते नेत्राञ्जलिभिः पपुः । यथोक्तम्-

**श्रुत्वा श्रीवसुदेवनन्दनं त्रैलोक्यलावण्यनिधिं परेश्वरम् ।**
**आगत्य नेत्राञ्जलिभिः पुरौकसः पपुः परं तन्मुखपङ्कजम् ।।** (वि.ख. ४५)

तस्यैव भार्या भवितुं परमा सुन्दरी रुक्मिण्येव योग्या नान्येति नार्यः परस्परमूचुः। संहितायाः अश्वमेधखण्डे भगवतः श्रीकृष्णस्य सौन्दर्यालौकिकत्वं पूर्णरूपेण प्रतिपादितमस्ति यत् गोलोकप्रत्यावर्तनात्प्रागेव यज्ञावसरे श्रीभगवान् द्वारकाया व्रजमागतवान् । मथुरागमनकाले श्रीकृष्णो यादृशो शोभायुक्तो आसीत् तदानीमेव गोपाः तं तादृशमपश्यन्। तदेव नवीननिरदश्यामं किशोरवयसं शिशुं शरत्प्रभातकमलकान्तिमोचनलोचनयुक्तं शरत्पूर्णेन्दुशोभाढ्यमुखमण्डलं कोटिमन्मथलावण्यलीलानन्दितसुन्दरं सस्मितमुरलीहस्तं द्विभुजमतिसुन्दरं तडिद्वस्त्रधरं

चन्दनलिप्तसर्वाङ्गम् आजानुमालतीमालावनमालाविभूषितं मयूरपिच्छचूडं रत्नमुकुटोज्ज्वलं पक्वाबिम्बाधिकोष्ठं नासिकोन्नतशोभनं परमसुन्दरं श्रीकृष्णं दृष्ट्वा सर्वे व्रजौकसः आनन्दसागरे ममज्जुः । तदुक्तम्–

**एवं कृष्णस्य राजेन्द्ररूपं नेत्रे व्रजौकसः ।**
**पपुरानन्दसम्मग्नाः पीयूषं मानवा इव ।।** (अ.ख. ४०)

अतः भक्ताः सकलसौन्दर्याधारभूतस्य तस्य भगवतः राधापतेः श्रीकृष्णस्य पदद्वयं हृदि दधति । तथोक्तं संहितायाः विश्वजित्खण्डे भक्तप्रियस्य भगवतः श्रीकृष्णस्यालौकिक-रूपवर्णनप्रसङ्गे–

**शरद्विकचपङ्कजश्रियमतीव विद्वेषकं**
**मिलिन्दमुनिलेढितं कुलिशकञ्जचिह्नावृतम् ।**
**स्फुरत्कनकनूपुरं दलितभक्ततापत्रयं**
**चलद्द्युतिपदद्वयं हृदि दधामि राधापतेः ।।** (वि.ख. ४४)

***

## श्रीब्रह्मवैवर्त्तपुराणे सरस्वत्युपाख्यानम्



*चन्द्रिका प्रियदर्शिनी मोहान्ति*
*आचार्यद्वितीयवर्षम्*

श्रीब्रह्मवैवर्त्तपुराणे प्रकृतिस्वरूपनिरूपणे प्रकृतेः पञ्चभेदाः प्रतिपादिताः। तेषु सरस्वती अन्यतमा देवीभावेन परिचिता। श्रीब्रह्मवैवर्त्तपुराणे यत् लिखितमस्ति सृष्टेः आदौ परमात्मनः कृष्णस्य वामांशात् अतीवसुन्दरी श्यामा मनोहरा एका देवी समुद्भूता अभूत्। तस्याः आद्याशक्त्याः जिह्वाग्रात् सर्वशास्त्राधिदेवता सरस्वती समुद्भूता अभूत् । सा देवी सरस्वती चपला भक्तानुग्रहकातरा भक्तसम्पदरक्षणाय च सदा तत्परा इति तत्रोदिताऽस्ति। सा सरस्वती वाग्–बुद्धि–विद्या–ज्ञानाधिदेवता सर्वविद्यास्वरूपा चेति कल्पिता। सा साधूनां कृते सुबुद्धि–मेधा–प्रतिभा–स्मृतिदा च अस्ति। तया देव्या विना जगत् जीवन्मृतमिव भवति। वेदोक्ता सर्वसम्पन्ना सा देवी सर्वपूज्या सर्वमान्या च अस्ति। सा च नानाप्रकारसिद्धान्तभेदार्थ-कल्पनाप्रदाऽस्ति । व्याख्यामोदकरा,शान्ता वीणापुस्तकधारिणी शुद्धसत्वस्वरूपा सुशीला श्रीहरिप्रिया हेमचन्दनकुन्देन्दुकुमुदाम्भोजसन्निभा सा देवी तपः स्वरूपा तपसां फलदात्री च निगदिता । तपस्विनी



सा सरस्वती विद्यास्वरूपा सर्वसिद्धिस्वरूपा च अस्ति। चतुर्णां वेदानां वेदाङ्गानां छन्दसां मन्त्राणां विचक्षणा सा जपरूपा पुराणेषु तपस्विनी ब्रह्मणस्तेजस्वरूपा संस्कारकारिणी चेति स्मृता।

सरस्वत्याः पूजा माघमासस्य शुक्लपञ्चम्याम् अथवा विद्यारम्भे दिनेऽपि कुर्यात्। पूर्वेऽह्नि भक्तितः घटं संस्थाप्य देवपञ्चकं नैवेद्यादिभिः संपूज्य ततोऽभीष्टं प्रपूजयेत्। नवनीतं,दधि,क्षीरं, लाजान्, तिललड्डुकमिक्षुरसं शुक्लवर्णपक्वगुडं, मधु, स्वस्तिकं, शर्करां, शुक्लधान्यस्याक्षतान् शुक्लधान्यस्य पृथुकं शुक्लमोदकम् एतत्सर्वं नैवेद्यमर्पणं कुर्यात्। घृतसैन्धवसंस्कारैः हविषैः तथा व्यञ्जनैश्च नैवेद्यं कुर्यात्। यवगोधूमचुर्णानां घृतसंस्कृतपिष्टकं स्वस्तिकस्य पक्वरम्भाफलस्य च पिष्टकं परमान्नं सुधोपमं सघृतं मिष्टान्नं नारिकेलं तदुदकं केशरं मूलकं आद्रकं पक्वरम्भाफलं शुक्लचन्दनं नवीनशुक्लवस्त्रं सुमनोहरं च शङ्खं शुक्लपुष्पाणां माल्यं मुक्ताहारादिनि भूषणानि च निवेदयेत्। सर्वोपयुक्तमूलञ्च वैदिकाक्षरं तस्याः पूजायै परः मन्त्रः स्मृतः। तद्यथा– श्री ह्रीं सरस्वत्यै स्वाहा। अयं मन्त्रः कल्पपादपसदृशः। पुरा नारायणः जाह्नवीतीरे पुण्यक्षेत्रे वल्मीकाय इमं मन्त्रं प्रददौ। भृगुः सूर्यपर्वणी पुष्करे शुक्राय च इमं मन्त्रं दत्तवान्। एवं प्रकारेणास्य मन्त्रस्य चतुलक्षजपेन नृणां मन्त्रसिद्धिः भवेत्। मन्त्रसिद्धः जापकः बृहस्पतिसमो भवेत्।

सर्वकामदं श्रुतिसारं सरस्वतीकवचं गोलोके कृष्णेन रासमण्डले उक्तम्। अतीव गोपनीयं कल्पवृक्षसमं मन्त्राणां समूहैः समन्वितं तद् कवचं पठित्वा बृहस्पतिः बुद्धिमान् अभवत्। अपि च सरस्वतीस्तोत्रं पठित्वा महामुर्खोऽपि पण्डितः भवितुमर्हति । अनेन प्रकारेण सरस्वत्युपाख्याने सरस्वतीदेव्याः माहात्म्यं वर्णितमस्ति । इति शम् ।।

***

## शिवरात्रिमहत्त्वम्



*चिन्मयी तपस्विनी साहुः*
*आचार्यप्रथमवर्षम्*

पुरा कदाचित् सर्वश्रेष्ठत्वप्रतिपादनार्थं विधिविष्णुर्मध्ये विवादोऽभूत् । ततः तयोर्मध्ये तुमुलसंग्रामोऽपि बभूव । तयो एतादृशं संग्रामं दृष्ट्वा सर्वत्र महान् हाहाकारोऽभूत् । भयभीताः देवाः परमेश्वरसदाशिवस्य शरणापन्ना अभवन् । कृपामयः शिवः शान्त्वनावाक्यैः तान् शान्त्वयामास ।

ततः पशुपतिः शिवो अम्बिकया साकं रणस्थलं जगाम । रणक्षेत्रे परस्परं हन्तुकामयोः युद्धनिरतयोः तयोर्मध्ये सहसा भीषणाकृतिमहानलस्तम्भ आविर्बभूव । अस्त्रशान्तिकरं तमद्भुताकारं तेजोमयं स्तम्भं

दृष्ट्वा ब्रह्माच्युतौ चकितौ बभूवतुः । अनलसन्निभस्य तस्य स्तम्भस्य ऊर्ध्वम् अधश्च परीक्षार्थं तौ सत्वरं गतवन्तौ । सुकरतनुं धृत्वा विष्णुः पाताले तथा हंसतनुं धारयित्वा ब्रह्मा ऊर्ध्वे जग्मतुः । पातालात् दूरमपि गत्वा विष्णुः लिङ्गस्य मूलं नापश्यत । श्रान्तः सन् स रणक्षेत्रे प्रत्यावर्त्तनं चकार । ऊर्ध्वं गत्वा ब्रह्मा आपतन्तं केतकं पुष्पं दृष्ट्वा मिथ्यासाक्ष्यप्रदानार्थं तं प्रेरयामास । ततः तौ रणक्षेत्रे प्रत्यावर्त्तनं चक्रतुः । आह्लादितो ब्रह्मदेवः स्तम्भस्य मूलं तेन दृष्टमिति कथितवान् । केतकं पुष्पमपि मिथ्यासाक्ष्यमददात् । तदानीमेव भगवान् सदाशिवः तत्राविर्भूय सत्यशीलस्य विष्णोः प्रशंसा कृत्वा तस्मै साम्यमददात् । पुनश्च असत्यवादिनो ब्रह्मणः पञ्चमं शिरः भैरवहस्तेन छेदयामास, लोके ब्रह्मणः पूजां निषेधयामास, केतकं च स्वपूजायाः बहिष्कृतं चकार । पुनश्च अनन्तरं कृपां कृत्वा वैतानिकेषु यज्ञेषु गृहेषु च ब्रह्मणः स्थानं कल्पयामास । तथा वितानव्याजेन केतकस्यापि स्थानं कल्पयामास ।

एवं विधिमाधवौ केतकञ्चानुगृह्य देवैरभिष्टुतः सर्वदेवेश्वरः सभामध्ये विरराज । तं पूज्यं शिवं वरासने संस्थाप्य पुण्यैः पुरुषवस्तुभिः तौ विधिमाधवौ भक्त्या पूजयामासतुः । तानि एव पुरुषवस्तुनि ज्ञेयानि यानि प्रकृतिजानि दीर्घाल्पकालिकानि च सन्ति । हार–केयूर–नूपुर–किरीटमणि–कुण्डलैः यज्ञोसूत्रोत्तरीय–क्षौम–माल्याङ्गुलीयकैः, पुष्प–ताम्बुल–चन्दनाऽगुरुलेपनैः, धूप–दीप–सितच्छत्र–व्यजन–ध्वज–चामरैः, अन्नैर्दिव्योपहारैः वाङ्मनोऽतीतवैभवैश्च पतियोग्यवस्तुभिः तौ विधिअच्युतौ पशुपतिमर्चयामासतुः । ब्रह्मविष्णुभ्यामर्चितः प्रसन्नः शङ्करः नम्रौ तौ देवौ एवं प्राह यत्–

**तुष्टोऽहमद्य वां वत्सौ पूजयाऽस्मिन् महादिने ।**
**दिनमेतत् ततः पुण्यं भविष्यति महत्तरम् ।**
**शिवरात्रिरिति ख्याता तिथिरेषा मम प्रिया ।।** (शि.पु. १/९/९–१०)

यस्मिन् दिने स्तम्भरूपस्य शिवस्याविर्भावोऽभूत् तद्दिनं शिवरात्रिरिति ख्याता बभूव ।

शिववचनानुसारं यः शिवरात्र्यां तस्य लिङ्गबेरयोः पूजां करोति स ब्रह्मपदं लभते । शिवरात्रावहोरात्रं निराहारो जितेन्द्रियोऽवञ्चकः यथाबलं यथान्यायं शिवं योऽर्चयेत् स निरन्तरमेकवर्षपूजायाः फलं लभते । शिवरात्रौ शिवपूजनेन धर्मोऽभिवर्द्धते । शिवरात्रिः भगवतः शिवस्य प्रतिष्ठायाः उत्सवस्य च शुभदिनमस्ति ।

पुरा यस्मिन् दिने स्तम्भरूपेण परमेश्वरस्य शिवस्याविर्भावोऽभूत् तद् मार्गशीर्षे आर्द्रानक्षत्रस्य उदयकालः आसीत् । अतः मार्गशीर्षे आर्द्रानक्षत्रे ये पार्वत्या साकं परमेश्वरस्य दर्शनं कुर्वन्ति, ते शिवस्य कृते कार्त्तिकेयादपि प्रियाः भवन्ति । तस्मिन् शुभे दिने उमासहितपरमेश्वरशिवस्य लिङ्गरूपस्य अथवा बेरस्य यः दर्शनं करोति, अर्चनं करोति तस्य पुण्यफलं वाचा वर्णयितुं न कोऽपि समर्थः ।

यस्मिन् स्थले महादेवः तेजोमयस्तम्भरूपेण आविर्बभूव तत्स्थलं लिङ्गस्थानमिति ख्यातम् । आद्यन्तरहितं तल्लिङ्गं जगतां पूजनार्थं दर्शनार्थं च शिवेच्छया अणुमात्रं क्षुद्रं बभूव । अनलाचलसङ्काशं



तद् लिङ्गं यत्रोत्थितोमभूत् तद् स्थानं अरुणाचलमिति स्मृतमभूत् । तस्मिन् स्थाने निवासेन मरणेन च जन्तूनां मुक्तिलाभो भवेत् । अत्र दत्तं हुतं जप्तं सर्वं कोटिगुणं भवेत् । अतः स्वयं शिवेन क्षेत्रस्यास्य महत्वं निरूपितम्–

**मत्क्षेत्रादपि सर्वस्मात् क्षेत्रमेतत् महत्तरम् ।**
**अत्र संस्मृतिमात्रेण मुक्तिर्भवति देहिनाम् ।।** (शि.पु. १/९/१४)

तस्मात् अत्यन्तशोभनमिदं क्षेत्रं महत्तरमस्ति । सर्वकल्याणसम्पूर्णं सर्वमुक्तिकरं शुभञ्चास्ति । अत्र शिवलिङ्गार्च्चनात् सारुप्यादि मुक्तिलाभो भवति । सकलमनोरथोऽपि पूर्णो भवति ।

***

## पुराणेषु भुवनकोषविवरणम्



*धर्मेन्द्र-ओझा*
*आचार्य द्वितीयवर्षम्*

पुराणानुसारम् अनन्तानि ब्रह्माण्डानि सन्ति । तत्र प्रत्येकब्रह्माण्डे चतुर्दशभुवनानि भवन्ति । तानि च चतुर्दशलोकाः अप्युच्यन्ते । येषु सप्त लोका उपरि वर्तन्ते सप्त चाधः सन्ति । तेषु पृथिवीत आरभ्य भूः, भुवः, स्वः, महः, जनः, तपः, सत्यञ्चेति सप्तलोका उपरि विद्यन्ते । अधस्ताच्च सन्ति–अतल–वितल–सुतल–तलातल–रसातल–महातल–पातालाख्याः सप्त लोकाः । उर्ध्वलोकेषु देवानामधस्ताश्च असुराणां निवासो वर्त्तते । यथोक्तम् –

**भूर्लोकोऽथ भुवलोकः स्वर्लोकोऽथ महस्तथा ।**
**जनस्तपस्तथा सत्यमेतावत् लोकसंग्रहः ।।** (वा.पु–४६–१५०)
**अतलं सृष्टवान् ब्रह्मा ततोऽधो वितलं द्विज ।**
**ततोऽधः सुतलं चैव ततोऽधश्च तलातलम् ।।**
**महातलमध्यस्तस्मात् ततोऽधश्च रसातलम् ।**
**तस्मादधश्च पातालं लोकानेवं यथाक्रमम् ।।** (प.पु.८–२–९२)

देवराजस्य इन्द्रस्य राजधानी स्वर्गलोके असुरराजस्य च वलेः राजधानी पाताललोके विद्यते । एवमेव चनुर्दशानां लोकानामनेके अन्तर्विभागा अपि वर्तन्ते । यथा किल भुवर्लोकस्यअन्तर्विभागा गन्धर्वलोकादयः सन्ति तथैव भूलोकस्यापि मृत्यु पितृ–प्रेत–नरकनामकाः चत्वारो लोका अन्तर्विभागरूपेण वर्त्तन्ते । मृत्युलोकोऽयं चतुर्दशानां भवनानां केन्द्ररुपस्ति । अत्रैव जीवाः मातृगर्भात् जन्मलभन्ते

मृत्युलोके एव समुत्पद्यसर्वैः जीवैः स्वस्वशुभाशुभकर्मभोगानन्तरं नूतनानि शरीराणि संगृह्यन्ते । यतो हि मृत्युलोकोऽयं कर्मभूमिः, अत्रैव स्वातन्त्र्येण विविधानि शुभाशुभकर्माणि विद्यातुं सौकर्यं विद्यते । देवाः असुराश्च स्वस्वलोकेभ्यः अग्रे गन्तुं न प्रभवन्ति । किन्तु प्राणिनः अत्रैव मृत्युलोके जन्मआसाद्य भूयः सत्कर्मानुष्ठानद्वारा लोकान्तरेषु गन्तुं शक्नुवन्ति । अस्मादेव कारणात् अत्र ब्रह्माण्डे मृत्युलोकस्य प्राधान्यमस्ति ।

पार्थिवजगच्चरणसञ्चारयोग्यो भूलोकोऽस्ति प्रथमः । पृथिवी-सूर्ययो मध्येयतसिद्धगण-मुनिवृन्द-सेवित स्थानं विद्यतेतदस्ति द्वितीयो भुवर्लोकः । सूर्य-धृवयोर्मध्ये यच्चतुर्दशलक्षयोजनस्यान्तरमस्ति तदस्ति स्वर्गलोकः । भूर्भुवा स्वरिति त्रयोलोका त्रैलोक्यमित्युच्यते तथैषां सञ्ज्ञाऽस्ति कृतक इति । जन-तप-सत्य- लोका आकृतका इति कथ्यन्ते । अनयो र्द्वयोः कृतकाकृतकयोर्मध्यो महलोके विद्यते, य कल्पान्ते केवलं जनशून्यो जायते, किन्तु न सर्वथा प्रणश्यति । अत एव स कृतकाकृतक इत्युच्यते । एवं सप्तोर्ध्वलोकाः सप्त चाधोलोकाः सङ्कलनया एषां चतुर्दशलोकानां विस्तार एकं ब्रह्माण्डं भवति । तथाचोक्तं विष्णुपुराणे -

**पादगम्यन्तु यत् किञ्चिद्वस्त्वस्ति पृथिवीमयम् ।**
**स भूर्लोकः समाख्यातो विस्तरोऽयं मयोदितः ।।**
**भूमि-सूर्यान्तरं यच्च सिद्धादिमुनि-सेवितम् ।**
**भुवर्लोकस्तु सोऽप्युक्तो द्वितीयो मुनिसत्तम् ।**
**धृव-सूर्यान्तरं यच्च नियुतानि चतुर्दश ।**
**स्वर्लोकः सोऽपिगदितो लोक संस्थान चिन्तकैः ।।**
**त्रैलोक्यमेतत्कृतकं मैत्रेय ! परिपठ्यते ।**
**जनस्तपस्तथा सत्यमिति चाकृतकं त्रयम् ।।**
**कृतकाकृतकर्योमध्ये महर्लोक इति स्मृतः ।**
**शुन्यो भवति कल्पान्ते योऽत्यन्तं न विनश्याति ।।**
**एते सप्त मया लोका मैत्रेय ! कथितास्तव ।**
**पातालानि च सप्तैव ब्रह्माण्डसैव विस्तरः ।।** (२-८-१६-२१)

***



# पुराणनाम् अध्ययनस्यावश्यकता



*गीताराणी वारिक्*
*आचार्यद्वितीवर्षम्*

वेदेषु येषामाध्यात्मिकाधिदैविकाधिभौतिकबौद्धिकव्यवहारिकनैतिकसांस्कृतिक-देवमानुषजड-चेतनात्मकानां विषयाणां सूक्ष्मरूपेण विधायं विद्यते, ब्राह्मणभागे, आरण्यके, स्मृतिग्रन्थेषु च येषां प्रतिपादनमस्ति, तेषां सर्वप्रकारणां पुराणेषु आकर्षकबुद्धिगम्य मनोग्राह्योपदेशः प्रदकथानकरूपेण वर्णनं कृतमस्ति। पुराणेषु न केवलम् आचारव्यवहारविषयेवर्णितमस्ति, अपितु मानवजीवनस्य विविधानां भावनानां पूर्णं विवेचनं विद्यते। अतः पुराणानामध्ययनेन वेदार्थनिधीनामुपलब्धिर्भवितुमर्हति। यथार्थ ज्ञानं मानवीय जिज्ञासायाः पूर्तिश्च पुराणाध्ययनं विना न सम्भवति। पुराणेषु मानवोपयोगिनां समस्तज्ञानक्षेत्राणां समावेशोपलभ्यते। तदुक्तं स्कन्दपुराणे -

**पुराणमखिलं तात सर्वशास्त्रमयं स्मृतम् ।**[१]

**पद्मपुराणे** - तु स्पष्टमुल्लखितं वर्त्तते यद् येन पुंसा वेदस्यान्यशास्त्राणाञ्चाध्ययनं कृतं, परं पुराणानामानुशीलनं न विहितं तर्हि तेनोत्तमं ज्ञानं प्राप्तुं न शक्यते।

**वहुशास्त्रं समभ्यस्य बहून वेदान् सविस्तरम् ।**
**पुंसोऽश्रुतपुराणस्य न सम्यग्यति दर्शनम् ।।**[२]

यद्यपि महर्षिणा व्यासदेवेन ब्रह्मसूत्रे योगभाष्ये महाभारते च प्रतिपाद्याध्यात्मनिष्ठद्वारा त्रितापान्मुक्तये सरल उपायः प्रदर्शितोऽस्ति तथापि ज्ञाननिष्ठायाः पूर्णः परिपाकस्तु पुराणेष्वेव जातोऽस्ति।

पुराणानां कथाभिः सरलतया सर्वं साधनं श्रीघ्रं बुद्धिगम्यं कर्त्तुं शक्यते। यजुर्वेदस्य ईशावास्यमन्त्रे मनुष्यतायाः पूर्णविकाशस्य साधनं निर्द्धिष्टमस्ति, किन्तु केवलेन मन्त्रपाठेनार्थज्ञानेन सा भावना हृदये न जागर्ति। अतः पुराणप्रतिपादिताभिः महर्षेर्दधीचेः राज्ञः शिवेः मोरध्वजस्य च कथाभिरूपकारभावना, सत्यवादिनो हरिश्चन्द्रमहाराजस्य च कथाभिरूपकारभावना, सत्यवादिनो हरिश्चन्द्रमहाराजस्य युधिष्ठिरस्य चोपाख्यानेन सत्यनिष्ठा, दानवीरस्य वलेः कर्णस्य च कथानकेन दाननिष्ठा, वसिष्ठागत्यच्यवनादीनां कृत्यैरद्रोहनिष्ठा अनसूया-सती-सीता-सावित्री-मदालसा-दमयन्ती-नर्मदा-सुकन्या-सुलोचनादीनां सतीनां पवित्राचरणैः पतिव्रत्यधर्मपरायणातायाः सञ्चारः नरेषु नारीषु च सहसा भवति।

एवं "सत्यं वद, धर्मं चर" इत्याद्युपदेशमात्रेण कश्चित्सत्यवादी धर्मात्मा वा भवितुं नार्हति। अतो वेदवाक्यबोधितमिति कर्त्तव्यतां पुराणेषु कथानकरूपेण मनोग्राह्यं विधातुम् ऐहलौकिकं पारलौकिकं च जीवनं सफलयितुमादेशो दत्तोऽस्ति।

विशेषतः पुराणेषु सर्ग–प्रतिसर्ग–वंश–मन्वन्तर–वंशानुचरितेति पञ्चलक्षणामादाय मानवजीवनस्य चरमलक्ष्यमभूत् परमपुरुषार्थानां धर्मार्थकाममोक्षान् प्राप्तुमैतिहासिक–कथानामाधारेण प्रभावपूर्णपद्धतौ ज्ञानविज्ञानयोः विस्तारः प्रदर्शितोऽस्ति। पुराणेषु यावत् सुगमं चतुर्वर्गस्य सिद्धेः साधनमुपलभ्यते तावत् अन्यकाचित् न उपलभ्यते। महर्षिव्यासदेवप्रणीत अष्टादशपुराणे सर्वेषां धर्माणां सारं परोपकारः पुण्यम् , परपीडनं च महत्पापं विषये वर्णितमस्ति। अयं मानवतायाः कीदृग् महान् मौलिक आदेशोऽस्ति। आलोचकैः मतैः –

**अष्टादशपुराणेषु व्यासस्य वचनद्वयम्।**
**परोपकारः पुण्याय पापाय परपीडनम्।।** [३]

पुराणेषु मर्यदापुरुषोत्तमस्य भगवतो रामस्यादर्शचरित्रेण, तस्य विशिष्टजीवनेन मर्यदापालनेन च महती हृदयग्राहिणी शिक्षा प्राप्यते। जनमतमादृत्य सः स्वकीयां परमादरणीप्रियां सर्वगुणसम्पन्नां सुखदुःखसहचारिणीं धर्मपत्नी साध्वीं सतीं सीतामासन्नप्रसवामपि परितत्याज। पैतृकस्यानुशासनस्यादर्शं स्थापयितुं चक्रवर्त्तिसाम्राज्यपदं सहर्षं व्यक्तवान् च सकुलोन्मूलनं कृतवान्। अखिलेभूमण्डले यादृशनैतिकः, सामाजिकः, चारित्रिकः,धर्मिको व्यावहारिकश्चादर्शो रामस्य पवित्रे चरित्रे प्राप्यते, तादृश अन्य कस्याञ्चिदपि सभ्यतायां नोपलभ्यते। रामराज्ये शासनव्यवस्थाः विवरणं महर्षिणां व्यासदेवेन महाभारते एवंरूपेण प्रदर्शितोऽस्ति – न पुत्रमरणं केचिद्रामे राज्यं प्रशासति। बाल्मीकिमुनिना रामायणेऽपि (२/२/१२–१३) प्रोक्तम्–

**न पुत्रमरणं केचिद् द्रक्ष्यन्ति पुरुषाः क्वचित्।**
**नार्यश्चविधवा नित्यं भविष्यन्ति पतिव्रताः।।**
**न चाग्निजं भयं किञ्चिन्नाप्सु मज्जन्ति जन्तवः।**
**न वातजं भयं किञ्चिन्नापि ज्वरकृतं तथा।।**
**न चापि क्षुद्भयं तत्र न तस्करभयं तथा।**
**नगराणि च राष्ट्राणि धनधान्ययुतानि च।**
**नित्यं प्रमुदिताः सर्वे यथा कृतयुगे तथा।।** [४]



श्रीरामस्य राज्ये समये समये सुवृष्टि भवतिस्म, सर्वदा सुकालो वर्त्ततेस्म, न कदापि क्षामः उपतिष्ठतेस्म, सर्वा दिशः प्रसन्ना आसन् तथा नगर–जनपदादयो हृष्टपुष्टारोगैर्मनवैः परिपूर्णा आसन्। श्रीरामस्य शासनकाले च कस्याप्यकाले मृत्युर्भवतिस्म, नापि केषाञ्चित प्राणिनां कश्चिद्रोग उद्भवतिस्म, न वा कचिदुपद्रवो जायते स्म। अर्थात् सर्वविधकुशलिनः प्रशान्ताश्च जना आसन् –

**ना काले म्रियते कश्चिन्न व्याधिः प्राणिनां तथा।**
**नानर्थो विद्यते कश्चिद् रामे राज्यं प्रशासति।।** [५]

पुराणेषु सर्वेषामास्तिकदर्शनानां सिद्धान्तस्य सूत्ररूपेण निरूपणमस्ति। सांख्ययोगवेदान्तदर्शनानां तु पुराणेषु विशेषतो विवेचनमुपलभ्यते। किञ्च व्याकरणसाहित्यच्छन्दोज्योतिषनिरुक्तशिक्षाकल्पायुर्वेद–धर्नुवेदगन्धर्ववेदस्थापत्य वेदराजनीतिसमाजनीतिविविधर्माङ्गादिषु विषयेष्वपि पुराणेषु पर्याप्तः प्रकाशः प्राप्यते। पुराणानि भारतीयसंस्कृतेः विश्वकोषा उच्यन्ते। लौकिकविषयातिरिक्तं कृतमस्ति।

मानवजन्मनः मूलं लक्ष्यं भवति भगवत्प्राप्ति। तत्साधनानि च पुराणानि सन्ति। निष्कामकर्ममाध्यमेन त्यागवृत्तिग्रहणपूर्वकं स्वर्गापवर्गयोः मार्गस्य सुलभानि साधनानि पुराणान्येव सन्ति। पुराणानि सर्वाणि साधनानि योगक्रियासिद्धान्ततन्त्रमन्त्रकल्याणकारिभिः सिद्धान्तैः परिपूर्णानि सन्ति। अतः सर्वशास्त्रेषु पुराणानां महत्वं वत्तन्ते।

पुराणेषु ज्ञानस्य कर्मणः भक्तेश्च महत्त्वपूर्णवर्णनेन सह मानवजीवनस्य यावत्यो दृष्टयः सन्ति। तासां सर्वासां दृष्टीनां वर्णनं वर्त्तते। पुराणद्वारा आबालबृद्धानरा नार्यश्च समानं लाभं प्राप्तुं शक्नुवन्ति। पुराणानि भवरोगस्याद्भुतानि औषधानि सन्ति। संसारस्य सर्वासां समस्यानां सरलतया सुगमीकृतसाधनैः सम्पन्नानि पुराणानि भगवतो व्यासदेवस्य कृपया फलानि सन्ति। पुराणानि सांसारिकपापतापानां प्राणिनां प्रबोधम् अज्ञानान्धकारे निपतितानां प्रकाशम् , भ्रान्तनां सन्मार्गम्, निराशनाभाज्योतिः शोकसन्तप्तानामुल्लासमयं प्रसादम् , पथभ्रष्टानां कर्त्तव्यज्ञानम् , पापिनां पापनाशसाधनम् , नीतिविशारदानां नीतिनैपुण्यम् , निष्कर्मिणां साधनोपदेशम् , भक्तानां भक्तिभावम्, ज्ञानिनाम् लौकिकज्ञानस्य प्रकाशं च ददति। येनोद्देशन पुराणेषु सविश्वासं श्रद्धधति भक्तिभावेन च पुराणानां स्वाध्यायं कुर्वन्ति, ते समुद्रादमूल्यं रत्नमिव एभ्य उभयलोककल्याणकारिणां बहुमूल्यं सदुपदेशः प्राप्य स्वं जीवनं सफलयितुं समर्था भवन्ति।

पुराणानि त्रिकालेषूपयोगीनि सन्ति। तानि अतीतगौरवगानेन सह वर्त्तमानकाले सुखशान्तिसञ्चारं सम्पाद्य भविष्यतकालाय मुक्तिसन्देशं ददति। यतो हि पुराणानि सर्वश्रेष्ठमनुषेभ्यः तदधिकारानुसारं कर्मकर्त्तुं सन्मार्गसाधस्योपायं प्रदर्शयन्ति। अभ्युदयस्य निःश्रेयसस्य च सिद्धये जीवः कथमग्रेसरो

भवितुमर्हतीत्यस्य विषयस्य पुराणेषु विशदं वर्णनं विद्यते। पुराणेषु सृष्टिकालतः आरभ्यैकस्याविच्छिन्नक्रमस्य हृदयङ्गमस्याख्यानस्योपलब्धिर्भवति। अतः पुराणानि सर्वतोमुख्या उन्नतेः अभ्युदयानिः श्रेयसयोः साधनस्य च अक्षयो भाण्डागारो वर्त्तते।

पुराणेषु ज्ञान-कर्म-वैराग्य-भक्ति-विश्वास-यज्ञ-दान-तपो-यम-नियम-संयम-सेवा-दया-दाक्षिण्य-वर्णाश्रमधर्म-पुरुषधर्म-स्त्रीधर्म-सदाचारावतारादीनां कल्याणकारिणः सदुपदेशाः सरसया सुगमया सुरुचिपूर्णाया उपादेयया च भाषया लिखिताः सन्ति। एतदतिरिक्तं भूगोल-खगोलयोः विवेचनं स्थावरजङ्गमयोः सृष्टेश्च सूक्ष्मं वर्णनं विद्यते। पुराणेषु प्रदत्तेषु भूविवरणप्रसङ्गेषु विविधसिद्धपीठतीर्थक्षेत्रवनपर्वतादीना वर्णनमस्ति, येनाधुनिकानामनुसन्धानकर्तृणां महत्साहाय्यं प्राप्यते। एवं प्रकारेण सर्वोपयोगिनां पुराणानामध्ययनस्य महती आवश्यकताऽनुभूयते।

**पादटीप्पणी**

१. स्क.पु ७१ २.२४ २.प.पु ४/१०५/२२

३ गवेषणात्मकभाग पृ.२८ ४.बा.रा २/२/१२,१३

५.बा.रा ११/१३,१४

***

# योगवासिष्ठे पुरुषार्थस्य प्राधान्यम्



*जुस्मिता गुप्ता*

*आचार्यद्वितीयवर्षम्*

योगवासिष्ठः मुख्यतया वेदान्तशास्त्रमधिकृत्य विरचितः। वेदान्तशास्त्रस्य मुख्येषु प्रामाणिकेषु ग्रन्थेषु योगवासिष्ठोऽन्यतमः। अस्यापरं नाम महारामायणम् आर्षरामायणं ज्ञानवासिष्ठम् अथवा केवलं वासिष्ठमस्ति। एषः साम्प्रदायिकभेदभावरहितो ग्रन्थोऽस्ति। कस्यापि सम्प्रदायविशेषस्य चर्चा अत्र नोपलभ्यते। भगवद्भक्तानां कृते भागवतं कर्मयोगिनां कृते भगवद्गीता यथा उपयुक्ता अस्ति , तद्वत् ज्ञानिनां कृते च योगवासिष्ठोऽत्यन्तादरणीयो ग्रन्थः कथ्यते। अत्र गूढ दार्शनिकतत्वानां च सरलतया प्रतिपादनं दृश्यते। काव्य-आख्यान-दर्शन-शास्त्राणां बोधः अस्य ग्रन्थस्य पठनेनैव जायते। महर्षिणा वसिष्ठेन स्वयमुक्तं यत् -

"श्रीरामसदृशो शिष्यः वसिष्ठसदृशोगुरुः।
वासिष्ठसदृशं शास्त्रं न भूतो न भविष्यति ।।"



एतच्छास्त्रम् अलङ्कारविभूषितं दृश्यते। अतः इदं शास्त्रं रसमयकाव्यम् इति वक्तुमपि शक्यते। अत्र कति दोषाः अपि परिलक्षन्ते। एषु पुनरुक्तिदोषोऽन्यतम इति कथ्यते। क्रमविभाजनाभावदोषोऽपि अत्र परिलक्षते। पुनरुक्तिदोषवशात् ग्रन्थस्य कलेवरम् अत्यन्तं विशालम्। पुरुषार्थविषयेऽत्र लिखितं यत् -

व्याधिविनिर्मुक्तं शरीरं व्याधिविनिर्मुक्तं चित्तं च प्राप्य पीडाशून्यः सन् मनुष्यः भिक्षार्थं यत्नः कुर्यात्। दैवं पौरुषेण यो निवर्तयितुमिच्छति सः इहकाले परकाले च वाञ्छितं फलं प्राप्नोति। ये प्रयत्नं त्यक्त्वा दैवपरायणाः सन्तः तिष्ठन्ति ते योगवासिष्ठे आत्मशत्रव इति प्रोक्ताः सन्ति। तेषां धर्म-अर्थ-काम-मोक्षाश्च नश्यन्ति । संवित्स्पन्दो मनस्पन्द ऐन्द्रियस्पन्दश्चेतानि पुरुषार्थस्य रूपाणि सन्ति । एभ्यः पुरुषार्थेभ्यः फलोदयः भवति चेतश्च संवेदनशीलं भवति तथा च विषयज्ञानमपि बर्द्धते । सदा मनसः क्रिया कार्यान्विता भवति। तदनुसारं कर्मेन्द्रियाणि कर्माणि कुर्वन्ति। तदनुसारेण च शारीरिकक्रियाः प्रवर्तन्ते। जगति पौरुषस्य प्राधान्यं सर्वत्र वर्त्तते। परन्तु कुत्रापि दैवं कार्यसाधने कारणं न भवति। पुरुषकारेण एव बृहस्पतिः देवानां गुरुः अभवत् । पुरुषार्थद्वारा शुक्रः दैत्यगुरुः बभूव। दैन्यदारिद्र्यदुःखार्ताः अनेकनराः पौरुषेण एव देवेन्द्रतुल्यतां गताः सन्ति। शास्त्रतः गुरुतः स्वतः चेति पुरुषार्थस्य सिद्धित्रयो दृश्यते। सर्वत्र पुरुषार्थ एव सिद्धेः हेतुरस्ति, दैवस्य कारणात् कस्यचन सिद्धिलाभः न दृश्यते। अशुभेषु समाविष्टं चित्तं शुभेषु एव अवतारयेत्। यथा प्रयत्नः तथैव शीघ्रफललाभोऽपि भवेदिति निश्चित्य कर्म कुर्यात्। दैवेन काऽपि फलप्राप्तिः नैव भवति। संसारे प्रत्यक्षादिप्रमाणैः नित्यं पौरुषकर्म फललाभश्च दृश्यते । विदेशादि गमनेन पौरुषादिफलप्राप्तिः जायते इति दृष्टिगोचरो भवति। संसारे भोक्ता एव नृत्यति नाऽभोक्ता तथा च गन्ता एव गमनपरायणो भवति। वक्ता एव वचांसि वक्ति। एतानि सर्वाणि कर्माणि पौरुषस्य फलमिति दृश्यते। नृणां सफलं फलं पौरुषेण एव फलितं भवति। दुस्तरेभ्यः संकटेभ्यः सुबुद्धयः यत्नेन च समुत्तरन्ति । यो यथा प्रयतते स तत् तत् फलैः युक्तः भवति। शुभेन पुरुषार्थेण शुभफलम् आसाद्यते, अशुभेन पौरुषेण अशुभफलं प्राप्यते। देशकालावस्थानात् पुरुषार्थतः फलप्राप्तेः निर्देशः शास्त्रेषु वर्तते। पुरुषार्थादेव देशकालवशात् फलप्राप्तिः चिरेणैव भवति। यं दैवमिति उच्यते। दैवम् अस्मिन् लोके अथवा लोकान्तरे न केनापि दृष्टं, कर्मणः फलमेव दैवमित्युच्यते। लोके पुरुषः जायते वर्द्धते पुनश्च जीर्यते। अर्थप्रापकं कार्यमेव पौरुषशब्देन प्रोक्तम्। पौरुषेण एव सर्वं प्राप्यते। कर्मणः यत् फलं तदेव स्वर्लोके देवाभिधानेनोक्तं भवति। यथा पौरुषे जरायौवनबाल्यावस्थादयः दृश्यन्ते, दैवस्य स्थितिः तादृशी प्रत्यक्षरूपेण दृष्टिपथारुढः न जायते, देशान्तरगमनं व्यापारश्च पौरुषेण एव भवति । न तु दैवतः। यो अनर्थप्राये कार्ये प्रयत्नरतः सा तु अनुत्तमाचेष्टा इति प्रोक्ता। अनया किञ्चित् न प्राप्यते। अनन्त

समतानन्दः परमार्थम्। वस्तुतः ये जानन्ति ते शास्त्रसाधकाः कथ्यन्ते। पौरुषेण दैत्याः जिताः भुवनक्रियाश्च स्थापिताः। पौरुषेण विष्णुना इह जगन्ति रचितानि। अस्मिन् जगति उत्तमजीवनयापनाय पौरुषप्राप्तये सर्वे प्रयत्नं कुर्युः इति योगवासिष्ठे महर्षिवसिष्ठस्य उपदेशः वर्त्तते ।

***

# भक्तिरसायने गर्गसंहितायाञ्च भक्तिरहस्यम्

*ज्योतिर्मयी मिश्रः*
*आचार्यद्वितीयवर्षम्*



अति दुर्लभं मानवशरीरमासाद्य योऽहर्निशं भगवच्चरणचिन्तनपरायणः सन् संसारसागरादात्मानमुद्धर्तुं न प्रयतते, तस्य जीवनमसफलम्। तस्य महती दुर्गतिश्च भवति। श्रीमद्भागवते सः आत्महा प्रोक्तः ।

जीवः विभिन्नासु योनिषु भ्रममाणोऽनेकान् क्लेशान् सहमानो विविधाञ्च यातनाः अनुभवन् यावत् प्रभुपादपद्मं नोपतिष्ठते तावत्तस्य पापशापयोः शान्तिः न जायते । अतो जीवः आनन्दधामानं परमात्मानमुपास्यैव आनन्दमनुभवितुमर्हति नान्यथा । भगवत्प्राप्तये भक्तिरेवास्ति अतिसरलो मार्गः। भगवद्भक्त्या नूनं सर्वविधं सुखं समुपलभ्यते। मोक्षोऽपि सुलभायते । महर्षिणा शाण्डिल्येन स्वशाण्डिल्यभक्तिसूत्रे ईश्वरं प्रति परमानुराग एव भक्तिर्निगदिता, यतो हि परमेश्वराभिमुखेन प्रेम्णैव जीवोऽमृतरूपः मोक्षः लभते । तद्यथा -

**सा परानुरक्तिरीश्वरे । तत्संस्थामृतत्त्वोपदेशात् ।**

अङ्गिरसमुनिमतेन भक्तिर्भगवन्तं प्रति अनुरागविशेषः । अलौकिकेश्वरानुरागरूपा वा । तन्मते सर्वासु चित्तवृत्तिषु वृत्तिद्वयं प्रधानम्। सुखानुशायि रागः, दुःखानुशायि द्वेष इति । योगसूत्रानुसारेण सुखानुस्मरणपूर्वकं प्रवृत्तिरेव रागः । दुःखानुपुरःसरं विरुद्धभावोत्पत्तिरेव द्वेषः । तथा च तमः प्राधान्यात् द्वेषवृत्तिद्वेषस्य रागवृत्तिश्च सत्त्वोन्मुखरजः प्राधान्येन सुखस्य हेतुर्भवति । भक्तिः किल द्वेषप्रतिकूला रागानुकूला चालौकिकी वृत्तिः । अलौकिकी भगवद्भक्तिः सात्त्विकी यतस्तया साकं भगवदनुरागस्यास्ति सम्बन्धः। भक्तिरसायनस्य प्रथमे उल्लासे धर्मपूर्वकं भगवद्गुणानामाराधनेन द्रवीभूतस्य चेतसस्तैलधारा –वदविच्छिन्नधारावाहिका भववदाकारवृत्तिरेव भक्तिसामान्यलक्षणमभिहितं श्रीमधुसूदनसरस्वतीपादेन

**द्रुतस्य भगवद्धर्मद्धारावाहिकतां गता ।**
**सर्वशो मनसो वृत्तिर्भक्तिरित्यभिधीयते ।।**



भक्तिविशेषप्रतिपादके द्वितीये उल्लासे तु द्रवीभूतचेतसि मनसः गोविन्दाकारतावृत्तिरेव भक्तिरित्युक्ता । **द्रुते चित्ते प्रविष्टा या गोविन्दाकारता स्थिरा सा भक्तिरित्यभिहिता ।**

श्रीमद्गर्गसंहितायां भक्तेः चरमोत्कर्षः प्रतिपादितोऽस्ति । भगवत्प्राप्तये भक्तिरेव मुख्यसाधनमिति संहितायां निर्देशितम्। भक्तिः मुक्तेरपि गरीयसी पुनश्च निरपेक्षाः भक्ताः भक्तिं विहाय स्वर्गादिसकलं तुच्छं मन्यन्ते। यतः परिपूर्णतमः भगवान् श्रीकृष्णः गोलोकेशः केवलं भक्त्या हि वशीभूतः भवति नान्यैः।

**क) भक्तिभेदाः -**

श्रीमद्गर्गसंहितायां भक्तेः भेदाः प्रदर्शिताः सन्ति। सगुणनिर्गुणभेदेन भक्तिः द्विधा -

**भक्तियोगो द्विधा राजन् सगुणश्चैव निर्गुणः ।**
**सगुणस्स्याद्बहुविधो निर्गुणश्चैकलक्षणः ।।**
**सगुणस्यादबहुविधो गुणमार्गेण देहिनाम् ।**
**तैर्गुणैस्त्रिविधा भक्ता भवन्ति शृणु तान्पृथक् ।।**

पुनश्च सगुणभक्तिः त्रिविधा । १. तामसी, २. राजसी, ३. सात्त्विकी ।

निर्गुणभक्तेः लक्षणं तत्र एवं निरूपितमस्ति यत् – निर्गुणभक्ताः भगवत्प्रेम्णा निमज्जिताः सन्तः सार्वभौमं पारमेष्ठ्यं शक्रधिष्ण्यं रसाधिपत्यं योगसिद्धिं च न वाञ्छन्ति। पुनश्च हरिणा दीयमानमपि सालोक्यं ते नेच्छन्ति । भगवद्विरहातुराः तेऽपि सामीप्यं न वांञ्छन्ति । कारणं सामीप्येन प्रेमराहित्यं भवतीति ते चिन्तयन्ति ।

**भक्तेः माहात्म्यम् -**

कृष्णभक्तस्य महात्म्यवर्णने मुखरितायाः गर्गसंहितायाः विज्ञानखण्डे श्रीकृष्णभक्तानां चरमोत्कर्षः प्रतिपादितः । तेषां महत्त्ववर्णनपूर्वकं लिखितं यत् दूरात् कृष्णभक्तं वीक्ष्याधयो व्याधयः तथा भूतप्रेतपिशाचाश्च पलायन्ति । नद्यो नदाः, पर्वतसमुद्राश्च तेभ्यः मार्गं प्रयच्छन्ति । ज्ञाननिष्ठानां विरक्तानां महात्मनां तद्भक्तानां दर्शनं पुण्यवर्जितैः सर्वदा दुर्लभम् ।

**भक्तेः** विस्तृतपर्यालोचनान्तरं गर्गसंहितायां भगवतः श्रीकृष्णस्य भक्तिः सर्वश्रेष्ठा इति विवेचिता। यतः सा **भक्तिः** भवमहार्णववारिवेगादुद्धारिणी यमभयविनाशिनी विषयसंचितकर्मणां संहारिणी हरेः परमपदविधायिनी च ।

***

# श्रीकृष्णस्य गार्हस्थ्यलीला



*लिप्सा तनया दाश:*
*आचार्यप्रथमवर्षम्*

श्रीमद्गर्गसंहितायाम् अश्वमेधखण्डे भगवत: श्रीकृष्णस्य गृहस्थाश्रमच्छलेन विभूतियोग: प्रदर्शितोऽस्ति । अश्वमेधयज्ञसमये व्यासवचनानुसारेण चतु:षष्ठिर्दम्पत्य: जलाय गोमतीं जग्मु: ।

**देवकीरोहिणीं कुन्तीं गान्धारीं च यशोमतीम् ।**
**पुरस्कृत्य निजग्राहकुम्भे भैष्म्यायुतो हरि: ।।**
**रुक्मिण्या सहितं यान्तं कृष्णं दृष्ट्वा समागमे ।**
**नारद: कलहं कर्तुं सत्यभामागृहं ययौ ।** (अ.ख.५५)

तत्रागत्य स नारद: सत्यभामायै रुक्मिण्या: तद् सौभाग्यमवर्णयत् । तदाकर्ण्य दु:खिता सा रुरोद । तदा नारदचेष्टितं विज्ञाय श्रीकृष्ण: रूपेणैकेन शीघ्रं सत्यभामाया: पुरमागत्य भोजनायागतोऽस्मि पुनश्च रुक्मिण्या सह गोमतीं न गत इति कथयित्वा तां शान्त्वयामास । तद् ज्ञात्वा भीत: नारद: तत: जाम्बवत्या: गृहं गत्वा तस्या: अग्रे सर्ववृत्तान्तमब्रवीत् । तस्य वचनं श्रुत्वा जाम्बवती उक्तवती यत् हे मुने ! मृषा मा वद । भोजनानन्तरं श्रीनाथ: गृहे शयनं करोति इति निशम्य सन्दिग्धचित्त: नारद: ततो निर्गत्य मित्रविन्दादीनामन्यासां कृष्णभार्याणां गृहाणि चक्रमु: । परन्तु सर्वा: तथैव ऊचु: ।

**पुनर्विचार्य देवर्षिगोपानां मन्दिराणि च ।**
**प्रययौ कथितुं वार्त्तां राधिकायै च मानद: ।।**
**तत्र दिव्यं तमक्षैश्च राधया नन्दनन्दनम् ।**
**गोपीभि: सहितं वीक्ष्य ऋषिर्गन्तुं मनोदधे ।।** (अ.ख.५५अ)

गन्तुमुद्यतम् ऋषिं वीक्ष्य श्रीकृष्ण: सहसोत्थाय पाणिं धृत्वा यथोचितं सत्कारं कृत्वा स्वमायामवर्णयत् ।

श्रीमद्भागवते दशमस्कन्धे एकोनसप्ततितमे अध्याये नारदस्य श्रीकृष्णगार्हस्थदर्शनवर्णनं सरससुन्दरम् अतिवास्तविकं च । नारदस्य गोपीनां गृहपरिभ्रमणं संहितायामाधिक्येन वर्णितमस्ति ।

***



# सरस्वत्युपाख्यानम्

*मधुस्मितानायक:*
*आचार्यप्रथमवर्षम्*

**बाग्बुद्धिविद्याज्ञानाधिदेवता परमात्मन: ।**
**सर्वविद्यास्वरूपा या सा च देवी सरस्वती ।।**
**सुबुद्धि: कविता मेधा प्रतिभा स्मृतिदा सताम् ।**
**नानाप्रकारसिद्धान्तभेदार्थकल्पनाप्रदा ।।**

सृष्टे: आदौ परमात्मन: ब्रह्मस्य वामांशात् अतीव सुन्दरी श्यामा मनोहरा एका देवी समुद्भूता अभूत् । तस्या: आद्याशक्त्या: जिह्वाग्रात् सर्वशास्त्रादिदेवता सरस्वती जाता अभूत् ।

**सरस्वतीनद्या: महत्त्वम्**— पुरा सा सरस्वती वैकुण्ठे नारायणान्तिके आसीत् । कलहात् कलया गङ्गाशापेन सा भारते पुण्यदा पुण्यतीर्थस्वरूपिणी सरित् बभूव: । कृतपापक: मनुष्य: तत्र स्नात्वा सर्वपापेभ्य: मुच्यते । चतुर्दश्यां पौर्णमास्यां दिनक्षये ग्रहणे व्यतीपातेऽन्यस्मिन् पुण्यदिनेऽपि च य: तत्र सरस्वत्यां स्नाति स: वैकुण्ठे हरे: सारूप्यं लभते । सरस्वतीमन्त्रकं य: मासमेकं जपते महामूर्खोऽपि स: कवीन्द्रो भवेत्, इत्यत्र न संशय: । नित्यं सरस्वतीनद्यां य: स्नात्वा मुण्डनं करोति तस्य मानवस्य गर्भवासं न विद्यते ।

**सरस्वत्या: अभिशापवृत्तान्तम्**— ब्रह्मवैवर्त्तपुराणानुसारेण नारायणस्य हरे: लक्ष्मी सरस्वती गङ्गा चेति तिस्त्र: भार्या: आसन् । ता: हरिसन्निधौ प्रेम्णा समा: तिष्ठन्ति स्म । एकदा विष्णो: मुखं निरीक्ष्य गङ्गा पुन: पुन: कटाक्षं कृतवती । रामाया: तस्या: वक्त्रं निरीक्ष्य विभु: हास्यं कृतवान् । तद्दृष्ट्वा लक्ष्मी क्षमां चकार । परन्तु सरस्वती कोपवचनम् उक्तवती । सरस्वत्या: कुपितवचनं श्रुत्वा हरि: मनसा आलोच्य बहि: जगाम । नारायणे गते वागाधिष्ठातृ देवी सरस्वती गङ्गां रुषा कथितवती यत् हे निर्लज्जे ! त्वं कथं स्वामिगर्वं करोषि ? अधिकं स्वामिसौभाग्यं विज्ञापयितुमिच्छसि किम् ? अत: हरिसन्निधौ तव मानहानिं करिष्यामि' इति उक्त्वा केशगृहीतुमुद्यतां वाणीं मध्ये स्थिता पद्मा वारयामास । तदा वाणी पद्माम् उक्तवती – ''विपरीतं दृष्ट्वा यत: त्वं किञ्चिदपि न वक्तुमर्हसि, सभामध्ये यथा वृक्ष: यथा सरित् इव तिष्ठसि, तस्मात् त्वं वृक्षरूपा सरिद्रूपा च भविष्यसि ।'' शापं श्रुत्वा सा देवी लक्ष्मीं न शशाप न च चुकोप । तदा गङ्गा वाण्यै शापं दत्तवती यत्– ''त्वं सरित्स्वरूपा भव, मर्त्यं च गच्छ ।'' तस्य वचनं श्रुत्वा सरस्वती अपि गङ्गाम् शशाप यत्– ''त्वमपि महीं यास्यसि पापिपापं लभिष्यसि'' । एतस्मिन् अन्तरे तत्र भगवान् आजगाम । चतुर्भुज: स हरि: चतुर्भि: करै: सरस्वतीं धृत्वा वक्षसि वासयामास ।

पुरातनं ज्ञानेन च तां बोधयामास । ततः भगवान् लक्ष्मीम् उक्तवान्- ''हे लक्ष्मि ! त्वं धर्मध्वजगृहे कलयागच्छ। त्वम् तस्य अयोनिसम्भवा कन्या भविष्यसि । तत्रैव दैवदोषेण वृक्षत्वं च लभिष्यसि । मदंशस्यासुरस्यैव शङ्खचूडस्य कामिनी भव, पश्चाच्च मत्पत्नी सा भविष्यसि । कलया भारते भारतीशापात् पद्मावती नाम्ना नदी भव । हे गङ्गे ! त्वं पश्चाद्धारतं यास्यासि । भारतीशापाद् भारते भागीरथी भविष्यसि ।'' ''हे भारति ! गङ्गाशापेन त्वमपि भारतं गच्छ, ब्रह्मणः कामिनी भव । गङ्गा शिवस्थानं गच्छतु । पद्मा अत्रैव तिष्ठतु, एतच्छ्रुत्वा साश्रुनेत्रा सरस्वती भगवन्तं विष्णुं प्रायश्चित्तमपृच्छत् । लक्ष्मी अपि भगवन्तं गृहीत्वा शापमुक्तये निवेदितवती । तदा नारायणः उक्तवान्- ''भारती कलया नदीरूपेण भारतं यातु, अर्द्धांशेन ब्रह्मणः सदनं गच्छतु । स्वयं च मद्गृहे तिष्ठतु । भगीरथेन नीता सा गङ्गा त्रिभुवनं पूतं कर्तुं भारतं गच्छतु। स्वयं च मद्गृहे तिष्ठतु । तत्रैव चन्द्रमौलेश्च दुर्लभं मौलिं सा प्राप्स्यति । हे कमले ! कलांशांशेन त्वं भारते गच्छ । तत्र सरिद्रूपा पद्मावती भव । तुलसीवृक्षरूपं धृत्वा कलेः पञ्चसहस्रे वर्षे गते पुनः मोक्षणं प्राप्स्यसि । हे पद्मे ! विना विपत्तेः केषां महिमा भवेत् ? इत्युक्त्वा परमेश्वरः कथनाद्विरतो बभूव । इत्थं ब्रह्मवैवर्तपुराणे सरस्वत्याः शापवृत्तान्तः वर्णितः विद्यते ।

**सरस्वत्याः पूजाविधानम्**— माघमासस्य शुक्लपञ्चम्यां विद्यारम्भदिनेऽपि सरस्वती देव्यां पूजनं कुर्यात् । पूर्वेऽह्नि भक्तितः घटं संस्थाप्य वरुणदेवं नैवेद्यादिभिः सम्पूज्य ततो अभीष्टं प्रपूजयेत् । वक्ष्यमाणेन ध्यानेन बाह्यघटे ध्यात्वा बुधः पुनः षोडशोपचारैः तां पूजयेत् ।

***

# मोक्षसंहितायाः स्वरूपम्

*मामिना परिडा*
*आचार्यद्वितीयवर्षम्*

वेदान्तशास्त्रस्य मुख्यप्रामाणिकेषु ग्रन्थेषु योगवाशिष्टः अन्यतमः । अयं ग्रन्थः माण्डुक्य कारिकायाः वार्तिकव्याख्यानग्रन्थोस्ति । भगवतः भक्तानां कृते "भागवतः" कर्मयोगीनां कृते यथा "भगवतगीता" उपयुक्ता अस्ति । तद्वत् ज्ञानिनां कृते योगवासिष्ट अन्यन्तउपादयः । महर्षिवसिष्टेनस्वयम् उक्तम् -

"श्रीरामसद्रुशः शिष्यः विज्ञानशास्त्रकोषं विदुर्बुधाः
वसिष्टसदृशं शास्त्रं न भूतो न भविष्यति ।"

बृहद्योगवसिष्टमहारामायणे षड्प्रकारणानिसन्ति तेषां नामानि यथा- वैराग्य-मुमुक्षुव्यवहार-उत्पति-स्थिति-उपशम-निर्वाणश्चेति । श्रीयोगवासिष्टे मुमुक्षुव्यवहारप्रकरणे सप्तदशअध्याये



मोक्षसंहितायाः स्वरूपं प्रकाशितं विद्यन्ते । योगवासिष्टानुसारेण इयं मोक्षसंहिता द्वात्रींशसहस्राणिश्लोकयुक्ता परमनिर्वाणदायिनी मोक्षपायभूता च कथितास्ति। अनया संहिताया हृदिज्ञानालोकः प्रज्वलितः भवति । स्वर्गतरङ्गिणी इव एषा संहिता भ्रांतिशांत्यैकसैख्यदा ज्ञाता । यथा अवलोकनाद् रजाम् अहिभ्रान्तिः विनष्यति तथैव अस्याः संहितायाः प्रेक्षणात् वा ज्ञानात् संसारदुःखं नस्यति । अत्र इष्टान्तसारसुक्तानि षड्प्रकरणानि सन्ति । येषु वैराग्याक्षां प्रकरणं प्रथमं परिर्कितम् । सद्धैकसहस्रश्लोकयुक्तं प्रकरणमिदं दैवतत्वनिर्णायकम् अस्ति । ततः द्वितीयप्रकरणं भवति मुमुक्षुव्यवहारप्रकारणं यत् एकसहस्रश्लोकयुक्तं विद्यते । प्रकरणेस्मिन् मुमुक्षुनराणां व्यवहारं स्वभावंश्च विद्यते । तृतीये उत्पति प्रकरणे शतसहस्रश्लोकाः विद्यन्ते । प्रकरणेस्मिन् ब्रह्माण्डस्य विस्तारः सलोकाकाशपर्वतां पिण्डग्रह विनिर्मुक्तम् इत्यादिकं वर्णितं विद्यते । आख्यायिकाप्रधानं प्रकरणमिदं काल्पनिक तथा दार्शनिक तत्वं समन्वितं चास्ति ।

चतुर्थं भवति स्थितिप्रकरणम्, यत्र श्लोकसंख्या त्रिणिसहस्राणि सन्ति । तत्र जगत्-अहंकार-भावरूपम् इत्यादिकं वर्णितमस्ति । प्रकरणमिदं व्याख्यानाख्यायिकामयमस्ति । प्रकरणानुसारेण जगदिदम् अहं भावरूपा स्थितिम् उपागतास्ति । द्रष्टादृश्यक्रममत्र प्रौढनिति कल्पितम्। पञ्चमं भवति उपशान्ति प्रकरणं यस्य श्लोकसंख्याः पञ्चसहस्राणि सन्ति । एतत् प्रकरणं युक्तिसन्ततिसुन्दरमस्ति । इदं जगत अहं त्वं तद् एतद् इत्यादिभ्यः भ्रमेभ्यः एव समुत्पर्णमिति निर्देशितम् । अहंकार विमुढात्माजगति मोहग्रस्तं भवति अस्य प्रकरणस्य श्रवणे जगतभ्रमः नश्यति । अतः संसारचक्रमपि नस्यति । प्रकरणस्यास्य पाठेन संसारस्य अस्य मिथ्यात्वं भयङ्करत्वं निरर्थकत्वं च सम्मुखमायाति । पुनश्च अस्य प्रकरणस्य पाठेन अन्तर्लिन तरङ्गैघः शान्ताः भवन्ति । सौम्यवारि परिपूर्णा सरित् समानां च भवति । सर्वाः कामनाः शान्ताः भवन्ति । निर्वाणाक्षं प्रकरणं षष्टमस्ति यस्य श्लोकसंख्याः चतुर्दशसहस्राणि भवन्ति । अस्य प्रकरणस्य पाठेन ज्ञानचन्द्र उदेति । मूलअविद्यायाः च नाशःभवति । मोक्षरूपं कल्याणं च प्राप्यते । अस्य प्रकरणस्यश्रवणेन श्रोतुः मनः विषयरहितं प्रकाशमयं निर्मलं संसारभ्रमरहितं कृतकृत्यं च भवति । कार्यकारणकर्तृत्वहेयादेयदृशोज्झितः

**सदेह इव निर्देहः स संसारोप्यसंसृतिः ।**

कार्यकारणकर्तृत्वहेयादेयदृशोज्झितः सः संसारोप्यसंसृतिः सदेह विदेह इदं तिष्टति । सः मनुष्यः परप्रकाशरूप भवति । तस्य हृदयान्धकारः नश्यति । तस्य आशाविषुचिकादुरिभूता भवति । तस्यापि अहंकारवेतालः नष्टः भवति । सदेहवान् अपि जीबन्मुक्तः इव व्यवहरति । तस्य रोमाग्रभागे जगतलक्ष्मी निवशति । तस्य अन्तकरणे चिदाकाशे जगतलक्ष्मी सहस्राणि धर्ते । जीवनमुक्तस्य तस्य पुरुषस्य हृदयं परमात्मस्वरूपं भवति । यस्य तुलनं हरिहराब्जजलक्षशतैरपि न एत्ति ।

***

# भक्तवत्सल: श्रीकृष्ण:



*मनस्मिता प्रधान:*
*आचार्यप्रथमवर्षम्*

श्रीमद्गर्गसंहितायां भगवत: श्रीकृष्णस्य भक्तवात्सल्यं पूर्णरूपेण प्रदर्शितम् । भक्तानां कल्याणाय तस्यावतरणं भवतीति संहितायां सुनिर्णितम् । तेषां रक्षणार्थं निर्गुणोऽपि स सगुणरूपं धत्ते ।

**निर्ममो निरहङ्कार: समान: सर्वग: पर: ।**
**सदा वैषम्यरहितो निर्गुणोऽहं न संशय: ।।**
**तथाऽपि भक्तान्भजतो भजेहं वै तथा तथा ।।**

भक्ता अपि भगवत्प्रेम्णा निमज्जिता: सन्त: चतुर्वर्गमपि तुच्छं मन्यन्ते । अचला भक्तिरेव तेषां सर्वस्वम् । श्रीकृष्णदयित: दान्त:, शान्त:, कारुणिक: भक्ता: अखिलं पारमेष्ठ्यं महेन्द्राधिष्ठितसार्वभौमत्वं रसाधिपत्यं योगसिद्धिमपुनर्भवं च त्यक्त्वा हरिपादरजोसेवनं वाञ्छन्ति । तेन नैरपेक्ष्यं सुखमनुभवन्ति । राधादय: सर्वा: गोप्य: तदङ्गभूता व्रजगणा अपि सर्वे तस्य भक्ता आसन् । श्रीकृष्णस्य राधादीनां गोपीनां मध्ये सम्पर्को निरतिशय: कामगन्धशून्य-श्चासीत् । राधाया: प्रेमलक्षणया भक्त्या श्रीकृष्ण: तस्या वशीभूतोऽभवत्। श्रीकृष्णे तस्या अचलां भक्तिं विलोक्य सिद्धाश्रमे रुक्मिणी तां प्रशंसयन्त्याह–

**धन्यासि राधे वृषभानुपुत्री त्वद्भक्तिभावेन वशीकृतोऽयम् ।**
**वदत्यलं यस्य कथा त्रिलोकीं स एव वार्ता वदति त्वदीयाम् ।।** (द्वा.ख. १८)

संहितायां श्रीकृष्ण: भक्तानां सर्वस्वरूपेण बहुवर्णितम् । भक्तानां कृते स: दीनवत्सल: अनेकान् दु:खमोचकान् विग्रहान् धृतवान् । स ध्रुवाय ध्रुवपदमददात् । प्रह्लादस्य दु:खं दूरीचकार । गजोद्धारकर्त्ता स बले: गर्वं जहार । द्रौपदी दु:खसन्त्राणकारी स दु:खहारी हरि: । पाण्डवानां सहायक: स तान् गराग्निवनवासेभ्य: उद्धृतवान् । शक्रस्य गर्वनाशकारी श्रीकृष्ण: कंसादिभ्य: यदून् मोचयामास । सुरमातृद्विजानां पुत्रप्रदाता, जरासन्धेनाबद्धानाम् आर्त्तनृपाणां मोचनकर्त्ता, सोऽपि नृगस्योद्धारं चकार । स साक्षात्सुदाम्न: दैन्यहारक: । सैव श्रीकृष्णो वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धरूपेण विश्वस्य प्रतिपालक: साक्षाद्रूप । स एव माता, बन्धु: सखा च । स एव द्रविणं, सर्वेषां कर्ता, भक्तानां सर्वस्वरूपेण अभिवन्दित: । भक्ता: श्रीकृष्णस्य सर्वाधिका: प्रिया: तदुक्तं गर्ग संहिताया: विज्ञानखण्डे–

**भक्तात्प्रियो न विदित: पुरुषोत्तमस्य**
**शम्भुर्विधिर्न चरमानचरौहणेय: ।**



भक्तानुव्रजतिभक्तनिबद्धचित्त:
**चूडामणि: सकललोकजनस्य कृष्ण: ।।** (वि.ख. १४)

श्रीमद्भगवद्गीतायामप्युक्तमस्ति भगवता श्रीकृष्णेन–

**मद्भक्ता: यत्र गायन्ति तत्र तिष्ठामि नारद: ।।** इति ।

करुणावरुणालयमिन्द्रादिदेवगणसेवितपादपद्मे गोविन्दं नरवेषं श्रीकृष्णं ये भक्ता: भजन्ति संसारे तेषां किमपि क्वचिदपि भयं नास्ति । अत: स्वायंभुवचन्द्रहासादय: भक्ता: तस्य शरणापन्ना: अभवन् । यं श्रीकृष्णो रक्षति संसारे तं भक्षयितुं क: समर्थ: भवति ?

**तस्मात् कृष्णसमो नास्ति येनायं रक्षितो भयात् ।**
**सर्वे वयं नमस्यामस्तं कृष्णं भक्तवत्सलम् ।।**

***

# श्रीमद्भागवतमहापुराणे चतुर्विधप्रलयवर्णनम्



*मेघमालाजेना*
*आचार्यद्वितीयवर्षम्*

श्रीमद्भागवतमहापुराणमस्ति सर्वेषां ज्ञानविज्ञानानां नीति-सदाचार-शिष्टाचाराणामाधारभूत: ग्रन्थ: । अस्य ग्रन्थस्य रचयिता महर्षिव्यासदेव: । तस्य कृतय: भवन्ति अष्टादशमहापुराणानि, अष्टादशोपपुराणानि, अष्टादशौपपुराणानि, महाभारतं, ब्रह्मसूत्रञ्च । अष्टादशमहापुराणानां मध्ये भागवतमहापुराणम् अन्यतमम् । अस्मिन् ग्रन्थे द्वादशस्कन्धा: सन्ति । ते द्वादशस्कन्धा: अतीव महत्त्वपूर्णा: सन्ति । अस्मिन् द्वादशस्कन्धे चतुर्थाध्याये चतुर्विधप्रलयस्य वर्णनं विद्यते । तत्र शुकदेवगोस्वामी राजानं परीक्षितं प्रति कथयति, हे राजन् ! चतुर्युगसहस्रं ब्रह्मण: एकं दिनमित्युच्यते । ब्रह्मण: इदमेकं दिनम् एक: कल्प इति उच्यते । एकस्मिन् कल्पे: चतुर्दशमनव: भवन्ति । कल्पान्ते प्रलय: भवति । प्रलयसमये लोका: विनश्यन्ति ।

प्रलय: चतुर्विध: भवति । ते भवन्ति यथा– नित्य-नैमित्तिक-प्राकृतिक-आत्यन्तिकश्चेति । अस्मिन् विषये एक: श्लोकोऽस्ति । यथा–

**नित्यो नैमित्तिकश्चैव तथा प्राकृतिको लय: ।**
**आत्यन्तिकश्च कथित: कालस्य गतिरीदृशी ।।** (श्री.भा. १२/७/१७)

यदा भगवान् नारायण: विश्वम् आत्मसात्कृत्वा अनन्तशयने शेते तदा नैमित्तिकप्रलय: भवेत् । कथ्यते यत् ब्रह्मण: शतवर्षं मनुष्याणां कृते द्विपरार्द्धेण सह समानम् । यदा प्राकृतिकप्रलय:

आगच्छति तदा भुवि शतवर्षाणि यावत् पर्जन्यः न वर्षति । जनाः अन्नम् ऋते क्षुधार्दिताः सन्तः मिथः भक्षमाणाः अनेन प्रकारेण कालेन उपद्रुताः क्षयं यान्ति । तस्मिन् समये रविः स्वकीयरश्मिभिः सर्वरसं पिबते । ततः सङ्कर्षणमुखात् सांवर्त्तकः वह्निः उत्थितः भवेत् । तस्मिन् समये अनिलः शतवर्षाधिकं यावत् प्रचण्डवेगेन बहति । साम्बर्त्तकेन वातेन धूम्ररजैः सर्वम् आवृत्तं भवति । ततः मेघकुलानि स्वनैः नदन्ति । तथा शतं वर्षाणि यावत् वर्षन्ति । फलतः समग्रं विश्वम् एकमुदकं भूत्वा जलमग्नः भवति ।

उदप्लवे आपः भूमेः गन्धगुणं ग्रसति । ग्रस्तगन्धापृथिवी प्रलयत्वाय कल्पते । अथ अपां रसः तेजसि लीयते । तदनन्तरं तेजसः रूपं वायुः ग्रसते । ततः वायोः स्पर्शगुणं खं ग्रसते । अनेन प्रकारेण कालेन चेदिताः अव्यक्त-प्रकृति- अहङ्कार-गुणाः सत्त्वादयश्च ब्रह्मणि लीयन्ते । तदा प्रकृति-वाक् -मन - त्रिगुण - महतत्त्व - प्राणबुद्धीन्द्रियदेवताः अपि नैव भवन्ति । तथा च सन्निवेशः लोककल्पश्च न भवन्ति । अस्मिन् विषये श्रीमद्भगवते लिखितं यत्-

**न यत्र वाचो न मनो न सत्त्वं**
**तमो रजो वा महदादयोऽमी ।**
**न प्राणबुद्धीन्द्रियदेवता वा,**
**न सन्निवेशः खलु लोककल्पः ।।** (श्री.भा. ४/२०)

तदा स्वप्न-जाग्रत-सुषुप्तिश्चैताः तिस्रावस्थाः नासन् । तथैव खं, जलं, भूः, अनिलः, अग्निः, अर्कोऽपि नातिष्ठन् । सर्वत्र सुषुप्तावस्था एव आसीत् । एषः प्राकृतिकप्रलय इति उच्यते ।

भागवते शुकदेवगोस्वामी आत्यन्तिकप्रलयविषये राजानं परीक्षितं प्रति कथयति- हे राजन् ! आत्यन्तिकप्रलयः भवति मोक्षस्वरूपः । ज्ञानं तदाश्रयं भवति । यथा ज्योतिःदीपः चक्षुः रूपं चेते पृथग् न सन्ति तथैव बुद्धीन्द्रियार्थरूपेण ज्ञानं भाति । अर्थात् परमात्मस्वरूपं भाति । बुद्धेः अवस्थात्रयं भवति यथा जागरणं, स्वप्नः, सुषुप्तिश्च । इदं सर्वं मायामात्रम् । परमात्मना सह अस्य नानात्वस्य कोऽपि सम्बन्धः नास्ति । यथा व्योम्नि जलधाराः भवन्ति न भवन्ति वा तथैव इदं विश्वं कदाचिद् ब्रह्मरूपेण तिष्ठति न तिष्ठति वा । अनेन प्रकारेण प्रमाण्यते यत् परमात्मतत्त्वे नानात्वं नास्ति । यदि कोऽपि विद्वान् नानात्वमस्तीति कथयति तर्हि आकाश-महाकाशमध्ये, व्योम-सूर्य-जल-प्रतिविम्बितसूर्यमध्ये, अन्तः अनिलः बहिः अनिलमध्ये प्रभेदः अस्तीति मन्यते । अनेनोपायेन विद्वांसः परमात्मानं लौकिकवैदिकैः रूपैश्च व्याख्यां कुर्वन्ति । परन्तु यदा जीवः मायामयमात्मबन्धनं छित्वा अच्युतात्मनः भावे अवतिष्ठते, तदा तम् आत्यन्तिकप्रलय इति कथ्यते। जन्मप्रलयहेतवः भवन्ति नित्यप्रलयः । यथा वियति ज्योतिषाम् अवस्थाः नैव दृश्यन्ते तथैव अनाद्यन्तवतानेन कालेनेश्वरमूर्तिना जन्मप्रलयहेतवः दृष्टिगोचरः न भवेत् । अनेन प्रकारेण चतुर्विधप्रलयः भवेत्।

***



# श्रीराधाकृष्णयोः विवाहः

*ओमप्रकाशरणा*
*आचार्यप्रथमवर्षम्*

श्रीमद्गर्गसंहितायां राधाकृष्णयोः विवाहस्य रुचिरवर्णनं प्रदत्तम् । विश्वरूपदर्शनलीलायाः अनन्तरं संहितायां राधाकृष्णयोः नामकरणवृत्तान्तः वर्णितः । श्रीगर्गाचार्यः एकदा गोपमागत्य एकान्ते नन्दयशोदयोः समक्षे श्रीकृष्णस्य नामकरणं चकार । अनन्तरं वृषभानुपुरं गत्वा तत्रापि राधायाः नामकरणं कृतवान् । राधायाः नामकरणावसरे तस्याः योग्यतमः वरः श्रीकृष्णो नान्य इति गर्गः एकान्ते स्थितं सपत्नीकं वृषभानुमुपदिदेश ।

**असंख्यब्रह्माण्डपतिः गोलोकेशपरात्परः ।**
**तस्मात्परो वरो नास्ति जातो नन्दगृहे पतिः ।।** (गो.ख. १५/५३)

अस्याः लीलायाः अनन्तरं संहितायां श्रीकृष्णराधयोः विवाहः वर्णितः । एकदा श्रीनन्दः कृष्णेन सह वृन्दावने गोधनं चारयन् भयङ्करं वृष्टिपातं निरीक्ष्य भयभीतं स्वबालञ्च विलोक्य चिन्तितोऽभूत् । तदा दैवादागतां राधां तत्र वीक्ष्य प्रहृष्टः नन्दः बालं तस्यै समर्प्य भक्तिस्वरूपिणीं तां च प्रणम्य स्वपुरं गतवान् । तदानीमेव अत्यद्भुतं जातम् । श्रीराधा स्वहस्तं रिक्तं पुनश्च सुमनोहरमण्डपे पुष्पशय्यायां किशोरं श्यामसुन्दरं च विलोक्य चकिताभूत्। तदा किशोररूपः श्रीकृष्णः राधायाः समीपमागत्य सर्वं पूर्वगोलोकवृत्तान्तं तस्याः समक्षे वर्णितवान् । तस्मिन्नवसरे स्वयं ब्रह्मा तत्रागत्य हुताशनं प्रज्वाल्य, विधिपूर्वकं तयोर्विवाहं कारयामास । विवाहानन्तरं स तौ नत्वा मुद्रा स्वालयं ययौ । ततः श्रीकृष्णो राधया साकं नानाविधाः क्रीडाः कृतवान् क्रीडन्नेव सहसा स श्रीकृष्णः पुनः बालरूपं दधार । कृष्णविरहेण आतुरा सा राधा आकाशवाण्या प्रबोधिता सती नन्दालयं गत्वा यशोदायै श्रीकृष्णं दत्तवती। ब्रह्मवैवर्त्तपुराणे अस्याः लीलायाः शृङ्गारिकवर्णनमुपलभ्यते ।

***

# श्रीमद्भागवते ब्रह्मचर्याश्रमनियमाः

*प्रज्ञापरमिता जेना*
*आचार्यप्रथमवर्षम्*

श्रीमद्भागवतं नाम व्यासकृतं प्रथितम् पुराणम् । एतद् भगवतः परमज्योतिः ।श्रीमद्भागवतपुराणं पुराणसाहित्ये मुक्तामणिरिव विराजते। श्रीमद्भागवते श्रुतीनां स्मृतीनां उपनिषदां दर्शनानामन्येषां च सकलशास्त्राणां सारं निहितम् । भागवतपुराणं खलु

विद्यानां निधिः देवस्तुतीनां विधिः अवतारवादस्य उद्गमः भक्तिज्ञानकर्मणां संगमः, अध्यात्मतत्वस्य आगमः, सृष्टिविज्ञानस्य अवगमः, दुःखत्रयस्य निर्गमश्च वर्त्तते ।

भारतीयसंस्कृतौ आश्रमव्यवस्थायाः महत्वपूर्णस्थानमस्ति। मानवकल्याणार्थं जीवनविकासार्थञ्च भारतीयप्राचीनमहर्षिभिराश्रमव्यवस्था विहिता। मानवजीवनं शतवार्षिकमिति पुरा लोकधारणासीत्। मानवःश्रमेणैवात्मनःसुखमभ्युदयं च साधयति। पौराणिकमतानुसारं श्रमः पञ्चविधः यथा - अध्ययनात्मकः, सर्जनात्मकः, उपास्यात्मकः, सेवात्मकः, योगात्मकश्च कथ्यते। परन्तु भागवतानुसारेण आश्रमाः चतुर्विधाः। यथा-

"ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा ।

एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः ।।"

तदनुसारेण ब्रह्मचर्य-गृहस्थ-वानप्रस्थ-सन्यासाश्च इमे चत्वारः आश्रमाः। पुरा सश्रद्धमाश्रमाणां धर्मपालनं भवति स्म । परन्तु कालक्रमानुसारमाश्रमान् प्रति श्रद्धा न्युना जाता। येन सम्प्रति प्रायशः आश्रमव्यवस्था लुप्ता जाता। तथापि यत्रतत्रमाश्रमव्यवस्था प्रचलिताऽस्ति । जीवन यापनस्येयमादर्शव्यवस्था ।

१) अध्ययनात्मको - ब्रह्मचर्याश्रमः ।

२) तपस्यात्मको -वानप्रस्थाश्रमः।

३) सर्जनात्मको - गृहस्थाश्रमः ।

४) योगात्मकस्तु सन्यास एव ।

५) एतेषु ब्रह्मचर्याश्रमः प्रधानः भवति ।

**ब्रह्मचर्याश्रमस्य नियमाः** ब्रह्मणः अर्थात् वेदस्य चरणम् तथा आचरणं " ब्रह्मचर्य्यम् " इति कथ्यते। अर्थात् वेदोक्तनियमानुसारं यस्मिन् अवस्थाविशेषे मानवश्चरति सा अवस्था "ब्रह्मचर्य्य" शब्देन व्यपदिश्यते । श्रुतिषु स्मृतिषु च मानवजीवनं चतुर्द्धा विभज्यते । यथा - ब्रह्मचर्य्यं, गृहस्थाश्रमः, वानप्रस्थः, सन्यासः चेति। एतेषु प्रथमाश्रमः "ब्रह्मचर्य्याभिधः" । अयमेव जीवनस्य मूलाधारत्वेन तिष्ठति। अनेन एव गृहस्थाश्रमः सुखाय कल्पते, वानप्रस्थाय च रूचिरुदेति, सन्यासाश्रमस्यापि सम्यग् निर्वाहो भवति। अत एव सर्वाधारस्य ब्रह्मचर्य्यस्योपासना कर्त्तव्या।

वैदिकमतानुसारं मानवानामायुः शतवर्षाणि इति। "पश्येम शरदः शतं जीवेम शरदः शतम् ।" एतदनुसारं चतुर्णामाश्रमाणां समयः पञ्चविंशतिवर्षाणि भवति। यदा विद्यार्थी उपनीतो भवति, तदा स



गुरोरादेशानुसारेण ब्रह्मचर्य्यं पालयन् गुरोर्निकटे अध्ययनं करोति। ब्रह्मचारी सर्वदा गुरुकुले स्थित्वा स्वस्य इन्द्रियाणि संयम्य दास इव सर्वदा गुरोर्हितं आचरेत्। स सायं प्रातः गुरु-अग्नि-अर्क-सुरोत्तमानामुपासनां कुर्यात् । सर्वदा मौनं भूत्वा एकाग्रतासहकारे उभयकाले गायत्रीमन्त्रं जपेत्। गुरोः समीपे वसन् च्छन्दसां पाठं कुर्यात्। पाठस्यारम्भे शेषे च गुरोः चरणौ शिरसा नमेत् । शास्त्रानुसारेण स सर्वदा मेखला-मृग-चर्म-वस्त्र- जटा-दण्ड-कमण्डलु-यज्ञोपवीतान् धारयेत्, तथा हस्ते कुशधारणं कुर्यात्। स सायं प्रातः भैक्षं गुरवे निवेदयेत् । गुरोराज्ञानुसारं भक्षणं कुर्यात्। यदि गुरुः आज्ञा न दीयते तर्हि उपवसेत् । सर्वथा स्वल्पाहारं कुर्यात् , श्रद्धालुसुशीलो भुत्वा इन्द्रियसयमं कुर्यात् । स्त्रीषु स्त्रीनिर्जितेषु च यावदर्थं व्यवहरेत् । गुरुस्त्रीभिर्युवतिभिः च आलापं न कुर्यात् । केशप्रसाधनोन्मर्दस्नपनाभ्यञ्जनादिकम् च न कारयेत् । अस्मिन् विषये अक्तम् यथा -

"नन्वग्निः प्रमदा नाम घृतकुम्भसमः पुमान् ।

सुतामपि रहो जह्यादन्यदा यावदर्थकृत् ।।"

अर्थात् स्त्री अग्निसमा, पुमान् घृतसमः। अतः उभौ एकस्थाने न वसेत् । स्वस्य कन्यया सह पिता अपि न तिष्ठेत् । असौ जीवः आत्मना सद्बुद्धया इदं देहादिरूपं जगत् आभासमात्रं मिथ्याभूतं कल्पयित्वा निश्चित्य यावत् ईश्वरः स्वतन्त्रः मायामुक्तो न भवेत्, तावत् दैवं स्त्री पुमानिति भेदं न बिरमेत । ततो व्दैतात् अस्य विपर्ययः भोग्यताबुद्धिः स्यादतो जह्यादित्यन्वयः । यः ब्रह्मचर्यं ब्रतं पालनं करोति, तेन अञ्जनाभ्यञ्जनोन्मर्दस्त्र्यवलेखामिषं तथा मद्यपानांदिवं न करणीयं, स्रग्गन्दलेपनं न कुर्यात्, सः सर्व आभुषणान् त्यजेत् ।

एवं प्रकारेण गुरुकुले वसन् द्विजाः स्वस्य शक्त्यावश्यकतानुसारेण वेदपाठं, वेदाङ्गादीनां, उपनिषदामध्ययनं कृत्वा ज्ञानं लभेत्। सामर्थ्यनुसारेण गुरुदक्षिणां दत्वा गुरोः आज्ञया गृहस्थाश्रमे प्रविशेत् अथवा आजीवनं ब्रह्मचर्याश्रमे तिष्ठेत् । अग्निगुरुसकलप्राणिनां मध्ये भगवान् विशेषरूपेण विराजते। अतः तेषां मध्ये स सर्वदा ईश्वरं पश्येत्। यथा उक्तम् -

"एवं विधो ब्रह्मचारी वानप्रस्थो यतिर्गृही ।

चरन् विदितविज्ञानः परं ब्रह्माधिगच्छति ।। "

एवं प्रकारेण ब्रह्मचारी, वानप्रस्थी, सन्यासी गृहस्थश्च विज्ञानसम्पन्नो भुत्वा परं ब्रह्माधिगच्छति ।

***

# पुराणवाङ्मयस्य वैशिष्ट्यम्

*प्रतिभामयी परिडा*
*आचार्यप्रथमवर्षम्*



भारतीया संस्कृतिः श्रुति-स्मृति-पुराणानामाश्रयेण प्राचीनाकालादारभ्य अद्यावधिः अक्षुण्णा वर्तते। पुराणेषु वैदिकसंस्कृतेः स्वरूपमुपलभ्यते । वेदेषु यद् भारतीयाचार-विचार-व्यवहार-स्वरूपं संक्षेपत उपलभ्यते, तत्पुराणेषु कथनोपकथनद्वारा ततो विस्तृतं दृश्यते । अत एव महाभारतस्य आदिपर्वण्युक्तं यत् -

"इतिहासपुराणाभ्यां वेदार्थमुपबृंहयेत् ।"

पुराणानामाश्रयेणैव मानवजीवनस्योन्नतिकराः उद्यमाः धार्मिक-सामाजिक-सांस्कृतिक-राजनैतिकविचाराः, पञ्चदेवोपासनानां निरूपणम्, जीवस्य कर्त्तव्यता, परमेश्वरस्य सर्वत्रैकरूपता, सत्कर्मद्वारा लौकिक-पारलौकिक-सुखसाधनमित्यादयो बहवो विषयाः सर्वसाधारणमनुष्याः सरलतया अनायासेन च ज्ञातुं शक्नुवन्ति ।

लोकोपकारनिरतेन महर्षिणा वेदव्यासेन अष्टादशपुराणानि निर्माय स्वपुत्राय श्रीशुकदेवमुनये स्वशिष्याय रोमहर्षणाय च तानि उपदिष्टानि । तदुक्तं पुराणार्णवे -

"विस्ताराय च वेदानां स्वयं नारायणः प्रभुः ।
व्यासरूपेण कृतवान् पुराणानि महीतले ।।"

देवीभागवते आद्याक्षरक्रमेणाष्टादशपुराणनामान्येवं प्रोक्तानि सन्ति ।

मद्वयं भद्वयं चैव ब्रत्रयं वचतुष्टयम् ।
अनापलिङ्गकूस्कानि पुराणानि प्रचक्षते ।।

आदौ म-अक्षरे पुराणद्वयम्-मत्स्यपुराणम्, मार्कण्डेयपुराणम्
आदौ भ- अक्षरे पुराणद्वयम्- भागवतपुराणम्, भविष्यपुराणम्
आदौ ब्र- अक्षरे पुराणत्रयम्- ब्रह्म-ब्रह्मवैवर्त्त-ब्रह्माण्डपुराणम्,
आदौ व- अक्षरे पुराणचतुष्टयम्- वायुपुराणम्, वामनपुराणम्, वाराहपुराणम्, विष्णुपुराणम् ।
आदौ अ- अक्षरे एकम् - अग्निपुराणम् ।
आदौ ना- अक्षरे एकम् - नारदीयपुराणम् ।
आदौ प- अक्षरे एकम् - पद्मपुराणम् ।
आदौ लिं- अक्षरे एकम् - लिङ्गपुराणम् ।



आदौ ग- अक्षरे एकम् - गरुडपुराणम् ।
आदौ कू- अक्षरे एकम् - कूर्मपुराणम् ।
आदौ स्क- अक्षरे एकम् - स्कन्दपुराणम् ।

एतानि अष्टादशमहापुराणान्यपि उच्यन्ते । यथा अष्टादशमहापुराणानि भवन्ति तथैव १८ उपपुराणानि १८ औपपुराणानि च सन्ति । येषां रचना एतेषां महापुराणानामेवाधारेऽभवत् । प्राचीनकाले एतेषामुपपुराणानामौपपुराणानामपि विद्वद्वर्गे समादरो आसीत् ।यतः भारतभ्रमणकर्त्ता अल्वेरुणी स्वकीये भारतभ्रमणवृत्तान्ते आदित्य-सोम-शाम्ब-नृसिंहाद्युपपुराणानामुल्लेखः कृतवानस्ति ।

पद्मपुराणानुसारं सात्त्विक-राजस-तामस-भेदादष्टादशपुराणानां त्रिधा वर्गीकरणं क्रियन्ते। तत्र ६ सात्त्विकानि, ६ राजसानि, ६ तामसानि च पुराणानि सन्ति। तामसेषु पुराणेषु मत्स्य-कूर्म-लिङ्ग-शिव-स्कन्द-अग्निपुराणानां गणनास्ति। सात्त्विकेषु पुराणेषु विष्णु-नारदीय-भागवत-गरुड-पद्म-वाराहपुराणानां गणनास्ति । राजसानि पुराणानि सन्ति ब्रह्माण्ड-ब्रह्म-मार्कण्डेय-भविष्य-वामन-ब्रह्मवैवर्त्तादिपुराणानि । वस्तुतः पुराणेषु धर्म-दर्शन-भक्ति-कला-इतिहास-भूगोल-राजनीति-समाजव्यवस्थादि विभिन्नविषयिकाः सामग्र्यः सङ्कलिताः सन्ति । अतः पुराणवाङ्मयं भारतीयजीवनस्य साहित्यस्य च अस्ति अमूल्यं रत्नम् । अतीतं वर्त्तमानेन सह संयोजयितुं पुराणवाङ्मयं भवति स्वर्णमयी शृङ्खला । विश्वसाहित्येऽपि अष्टादशमहापुराणानि अनुपमानि श्रेष्ठरत्नानि सन्ति । पुराणेषु प्राचीनभारतस्येतिहासो निहितोऽस्ति ।

***

# आश्रमव्यवस्था

*प्रितम्प्रिया साहु*
*आचार्यप्रथमवर्षम्*



भारतीयसंस्कृतौ आश्रमव्यवस्थायाः महत्त्वपूर्णस्थानमस्ति । मानवकल्याणार्थं तज्जीवनविकासार्थञ्च भारतीयप्राचीनमहर्षिभिराश्रमव्यवस्थायाः वर्णनं कृतम् । मानवजीवनं शतवर्षिकमिति पुरा लोकधारणासीत्। मानवः आश्रमेणैवात्मनः सुखमभ्युदयं च साधयति । पौराणिकमतानुसारं श्रमः पञ्चविधः । यथा- (१) अध्ययनात्मकः, (२) सर्जनात्मकः, (३) तपस्यात्मकः, (४) सेवात्मकः, (५)योगात्मकश्च। श्रमप्रवृत्तिमधिकृत्य तस्य जीवनस्य चत्वारो भागाः कल्पिताः । तेषु प्रत्येकं पञ्चविंशतिवर्षावधिकः कृतः, इमे भागाः एवाश्रमाः। आसमन्तात्

श्रमोऽत्रेत्याश्रमशब्दस्य व्याख्या । आश्रमन्त्यत्र अनेन वा । इयमाश्रमव्यवस्था केवलं भारतवर्षेऽवलोक्यते नान्यत्र, आश्रमस्य विषये मनुना उक्तम् –

**ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा ।**
**एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः ।।**

तदनुसारेण ब्रह्मचर्य-गृहस्थ-वानप्रस्थ-संन्यासाश्च इमे चत्वारः आश्रमाः। पुरा सश्रद्धमाश्रमधर्मपालनं भवति स्म, परन्तु कालक्रमादाश्रमान् प्रति श्रद्धा न्यूना जाता । येन सम्प्रति प्रायशः आश्रमव्यवस्था लुप्ता जाता। तथापि यत्रतत्रेयमाश्रमव्यवस्था प्रचलिताऽस्ति । जीवनयापनस्येयमादर्शव्यवस्था। अध्ययनात्मको ब्रह्मचर्याश्रमः, तपस्यात्मको वानप्रस्थाश्रमः, सर्जनात्मको गृहस्थाश्रमः, योगात्मकस्तु सन्यास एव ।

इति महाभारते ब्रह्मचारिणां ज्ञानस्य, मानवानां गार्हस्थ्यस्य ऋषीणां तपसः, यतीनां त्यागस्य च प्रवृत्तय एकस्यैव पुरुषस्य जीवने सहपर्यवसानाय चतुराश्रमव्यवस्था समायोजिता । एषा हि निःसन्देहपूर्णतालाभाय वर्त्तते।

**(१) ब्रह्मचर्याश्रमः –**

वैदिकमतानुसारं मानवानामायुः शतवर्षाणि आसीत् । **"पश्येम शरदः शतं जीवेम शरदः शतम् ।"** एतदनुसारं चतुर्णामाश्रमाणां समयः पञ्चविंशतिवर्षाणि । यदा विद्यार्थी उपनीतो भवति, तदा सः गुरोरादेशानुसारेण ब्रह्मचर्यं पालयन् गुरोर्निकटे अध्ययनं करोति ।

तत्पश्चात् तस्य समावर्त्तनसंस्कारो भवति । तत्राचार्यः वटुमनुशास्ति, सत्यं वद, धर्मं चर, स्वाध्यायन्मा प्रमदः । आचार्याय प्रियं धनमाहुत्य प्रजातन्तुं न व्यवच्छेत्सी । सत्यान्न प्रमोदितव्यम्, धर्मान्न प्रमादितव्यम् । .... मातृदेवो भव, पितृदेबो भव, आचार्यदेबो भव । यानस्माकं सुचरितानि, त्वयोपास्यनि, नो इतराणि । ... श्रद्धया देयम् । अश्रद्धया देयम्, श्रिया देयम्, ह्रिया देयम्, भिया देयम्, संविदा देयम् । एष आदेशः, एष उपदेशः, एषा उपनिषद्, एतदनुशासनम् ।

**(२) गृहस्थअश्रमः –**

गृहस्थाश्रमस्य समयः पञ्चविंशवर्षादारभ्य पञ्चाशत्वार्षाणि यावत् स्वीकृतः। विवाहानन्तरं ब्रह्मचारी गृहस्थाश्रमे प्रविशति शतपथब्राह्मणे उक्तं यत् – ९ब्रह्चर्याश्रमं समाप्त गृही भवेत् ।

गृहस्थः सः सन्ततिमुत्पाद्य मातापित्रोः ऋणात् प्रमुच्यते अस्मिन्नाश्रमे पतिपत्न्योरिदं कर्त्तव्यं भवति यत् तौ परिवारस्य सर्वेषां सदस्यानां भरणपोषणाभ्यां सह तेभ्यः सुखं शान्तिञ्च प्रदद्याताम् । लौकिक-पारलौकिकसुखानां कृते धर्माचरणं कुर्याताम् । तौ पञ्चमहायज्ञानि च कुर्याताम् । मनुना उक्तम्–



**अध्यापनं ब्रह्मयज्ञं पितृयज्ञस्तु तर्पणम् ।**
**होमोदैवो वलिभूतो नृयज्ञोऽतिथिपूजनम् ।।**

धर्मशास्त्रेषु गृहस्थाश्रमः सर्वश्रेष्ठ आश्रमः कथितः । यतो हि ब्रह्मचारिणः वानप्रस्थः, सन्यासिनञ्च गृहस्थाश्रमिणमेवावलम्बन्ते । यतो हि गृहस्थ एव अन्नवस्त्रादिकं प्रदाय तेषां भरणपोषणं करोति । मनुना गृहस्थाश्रमस्य सर्वश्रेष्ठत्वं प्रतिपादितम् –

**सर्वेषामपि चैतेषां वेदस्मृतिविधानतः ।**
**गृहस्थ उच्यते श्रेष्ठः स त्रीनेतान्विवर्त्ति हि ।।**
**यथा नदीनदाः सर्वे सागरे यान्ति संस्थितिम् ।**
**तथैवाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम् ।।**

**(३) वानप्रस्थाश्रमः** –

वानप्रस्थाश्रमस्य समयः पञ्चशत्तमवर्षात् पञ्चशप्ततितमवर्षं यावत् स्वीकृतः यदा पुत्रस्यापि पुत्राः भवेयुः तदा मनुष्यः वानप्रस्थाश्रमे प्रविशेत् । सः गृहं परित्यज्य वने निवसेत् । शतपथब्राह्मणे उक्तम्, यत् –

**ब्रह्मचर्याश्रमं समाप्य गृही भवेत् ।**
**गृही भूत्वा वनी भवेत् ।।**

वानप्रस्थाश्रमस्य कृते मनुना लिखितं यत् – वानप्रस्थाश्रमे मनुष्यः लौकिक भोगविलासाद् विरतो भूत्वा इन्द्रियाणि स्व वशं कृत्वा वने निवसति । आश्रमेऽस्मिन् भार्यायाः कृते एष नियमो वर्त्तते, यत् सा स्वेच्छया पत्या सह वनं गच्छेत् अथवा गृहे स्थित्वैव पुत्रान् पालयेत् अथवा गृहस्थाश्रमं सम्भालयेत् । किन्तु पल्ली स्वपतिना सह वने निवसन्ती वानप्रस्थाश्रम एव निवासं श्रेयस्करं मन्यते ।

वानप्रस्थे मनन-चिन्तन-स्वाध्याय-तपोभिरेव ब्रह्मज्ञानं प्राप्यते । वानप्रस्थस्य अनिवार्यत्वं नासीत् वैदिकयुगे । तदा ब्रह्मचर्याश्रमाद् गृहस्थाश्रमाद् वा पुरुषाः सन्यासाश्रमं प्रविविशुः । यदा विरजेत् तदा प्रव्रजेदिति विधअनमासीत् ।

**(४) सन्यासाश्रमः**– शतपथब्राह्मणोऽप्युक्तम् – ९वनीभूत्वा प्रव्रजेत्" सपत्नीकः पत्नीं विहाय वा सन्यासाश्रमं गृहीयात् । पूर्णे वैराग्ये सत्येव सन्यासी भवितुं शक्नोति । सन्यासी शब्दस्यार्थ एवास्ति सम्यक् पूर्णरूपेण न्यासस्त्याग इति । सन्यासी योगी भवति तथा योगी चित्तवृत्तिं निरुद्धयति । यथा –"योगश्चित्तवृत्ति –निरोधः" । सन्यासाश्रमे मानवः सर्वतन्त्रस्वतन्त्रो भूत्वा महान् विचारको भवितुमर्हति । सन्यासस्य विधाने यस्याः सङ्कुचितसीमायाः परे भवितुं मानवोऽवसरं प्राप्नोति ।

गीताया भगवता कृष्णेनोक्तम् –

**अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।**

**स सन्न्यासी च योगी च न निरग्निर्नचाक्रमः ।।**

सन्न्यासी अनासक्तभावेन लोककल्याणाय सर्वं धर्ममनुतिष्ठेत् । सः फलोष्वनासक्तो भवेत् । सन्न्यासी केवलं गैरिकं वस्त्रं दण्डकमण्डलु भिक्षापात्रादिञ्च धारयेत् । यतः सः भ्रमणं करोति अतः परिव्राजकोऽप्युच्यते ।

***

# मेदिनी उपाख्यानम्

*प्रियङ्का दाशः*
*आचार्यप्रथमवर्षम्*

श्रीब्रह्मवैवर्त्तपुराणे मेदिनीवृत्तान्तं सम्पूर्णतया प्रतिपादितं विद्यते । अन्येषु पुराणेषु वसुधायाः सृष्टिविषये भिन्नं मतं प्रदत्तं विद्यते । मधुकैटभयोः मेदसा मेदिनी बभूवेति अन्येषां पुराणानामभिमतम् । परन्तु ब्रह्मवैवर्त्तपुराणानुसारेण श्रुत्युक्तं कारणमिदमस्ति यत् प्रलये पुरा जलस्थस्य महाविराटस्य कालेन सर्वाङ्गव्यापको मलः चिरं स्फुटं बभूव । स च मलः सर्वेषां लोम्नां विवरेषु प्रविष्टोऽभूत् । महता कालेन तस्माद् वसुधा बभूव ।

ब्रह्मवैवर्त्तपुराणानुसारेण सृष्टिकाले मेदिनी जलादुपरि आगच्छति । प्रलयकाले च सा जलाभ्यन्तरे तिरोभूता भवति । सागरान्विता सप्तद्वीपसंयुता मेरुसंयुता ग्रहचन्द्रार्कसमायुक्ता सर्वदुर्गसमन्विता सा वसुन्धरा परमेश्वरस्य लोमकूपे स्थिताऽस्ति । आदिसृष्टौ सा कृष्णेन सृष्टा अभूत् । वाराहकल्पे क्षित्यधिष्ठातृदेवी सा धरणी वाराहेण विष्णुना समुद्धृता देवैश्च परिपूजिता अभवत् । तस्मिन् कल्पे सा च वराहरूपिणः विष्णोः पत्नी स्मृता । हिरण्याक्षं हत्वा माहावाराहः रसातलात् महीं समुद्धृत्य पद्मपत्रमिव धरणीं जले स्थापयामास । तत्रैव ब्रह्मा सर्वं मनोहरं विश्वं निर्ममे । स वराहभगवान् धरण्या सह रहसि दिव्यवर्षं क्रीडां चकार । वर्षान्ते विष्णुः तां धरणीं त्यक्त्वा पूर्वं रूपं वराहं धृतवान् । तदा स परमेश्वरः धरणीं भक्त्या धूपैः दीपैः नैवेद्यादिभिश्च पूजयामास । तां सम्पूज्य महावाराहः तस्यै वरं दत्तवान् यत्– "हे शुभे! सर्वैः सम्पूजिता भव, गृहारम्भे वापितडागादीनामारम्भे कृषिकर्मणि च मनुभिः मानवादिभिः देवैश्च तव पूजा भविष्यति । ये मूढाः भूमिपूजनं न कृत्वा गृहारम्भादिकं करिष्यन्ति ते नूनं नरकयातनां प्राप्स्यन्ति ।

वरं प्राप्य प्रसन्ना धरणी उक्तवती– "हे प्रभो ! मुक्तां शुक्तिं हरेरर्चां शिवलिङ्गशिलां शङ्खं प्रदीपं



रत्नं माणिक्यं हीरकं मणिं यज्ञसूत्रं पुष्पं पुस्तकं तुलसीदलं जपमालां कर्पूरं सुवर्णकं गोरोचनां चन्दनं शालग्रामजलञ्चेतान् द्रव्यान् बोढुमहम् अशक्ताऽस्मि ।" धरण्याः वचनं श्रुत्वा भगवता एवमुक्तं यत्– "हे सुन्दरि ! ये मूढा एतानि द्रव्याणि तुभ्यं समर्पयिष्यन्ति ते नरकं यास्यन्ति ।" ततः भगवतः अंशेन धरण्याः गर्भात् मङ्गलः बभूव ।

***

# प्रेमस्वरूपः श्रीकृष्णः



*राजेन्द्र -आचार्यः*
*आचार्यप्रथमवर्षम्*

प्रेमरसपरिपूर्णा भगवतः श्रीकृष्णस्य लीलां श्रुत्वा भक्तस्य तृप्तिः न जायते, यथा सुधां पीत्वा अमरः, यथा च पद्मकर्णिकामलिः । तथा च राधिका । श्रीकृष्णकथां श्रोतुं तस्या उत्कण्ठाया अन्तो नास्ति । तस्या विह्वलतां वीक्ष्य सखी ललिता एकदा उक्तवती–

**कथं त्वं विह्वला राधे मूर्च्छिताविव्यथा गता ।**

**यदीच्छसि हरि सुभ्रु तस्मिन् स्नेहं दृढं कुरु ।।** (वृ.ख. १५)

तदा राधिका कथितवती यदि व्रजालङ्कारस्य चरणौ किल न प्राप्तौ तर्हि कदाचिदहं विग्रहं न धारयामि । तस्या वचः श्रुत्वा भयविह्वला ललिता मनोहरे कृष्णातीरे गत्वा कृष्णाय सर्वं प्राह–

यस्मिन् दिने च ते रूपं राधया दृष्टमद्भुतम् ।

**तद्दिनात्स्तम्भतां प्राप्ता पुत्तिकेव न वक्ति किम् ।।** (वृ.ख. १५)

तदा श्रीभगवान् तस्मिन् प्रेमैव कर्त्तव्यं कारणं तस्य प्राप्तये प्रेम एक एव उपाय इति उक्तवान् । सखीमुखात् श्रीकृष्णप्राप्तये प्रेमैव साधनमिति विज्ञाय राधा श्रीकृष्णप्रीत्यर्थे तुलसीसेवनव्रतं चकार । तस्या भक्त्या प्रसन्ना तुलसी देवी तस्या अवश्यं मनोरथं सफलं भविष्यतीति वरं दत्तवती ।

राधिकायाः तुलसीसेवनव्रतं विज्ञाय तस्याः प्रीतिपरीक्षणनिमित्तं श्रीकृष्णः वृषभानुपुरं ययौ । प्राकारपरिख्यायुक्तं चतुर्द्धारसमन्वितं वृषभानुवरस्य मन्दिरकौशलं विलोक्य मायायुवति–वेषो धृत्वा असौ अतीवरमणीयं राधायाः अन्तःपुरं प्रविवेश । मणिमन्दिराजिरे समागतामति–रूपवतीं तां मायायुवतीं दृष्ट्वा वृषभानुनन्दिनी तस्या सत्कारं कृत्वा परिचयमपृच्छत् । तदा मायायुवतीवेषधृक् श्रीकृष्णः आह–

**रम्भोरुनन्दनगरे नन्दगेहस्य चोत्तरे ।**

**गोकुले वसतिर्मेऽस्ति नाम्नाऽहं गोपदेवतः ।।**

त्वद्रूपगुणमाधुर्यं श्रुतं मे ललितामुखात् ।
तद् द्रष्टुं चञ्चलापाङ्गि त्वद्गृहेऽत्र समागता ।।

एवं तयोर्मेलनं परम्परा प्रीतिं च बभूव । तौ वने विराजतु । पुनश्च यदा सन्ध्या जाता प्रभाते आगमिष्यामीत्युक्त्वा सा गोपदेवता गतवती । अथ व्यतीतायां रात्र्यां मायायोषिद्वपुर्हरिः राधादुःखपशान्त्यर्थं वृषभानुगृहं गत्वा राधिकां खेदसम्पन्ना दृष्ट्वा खेदस्य कारणं च श्रुत्वा प्रेमिकप्रवरः श्रीनन्दन्दनः राधां सम्बोध्य कृष्णनिन्दां चकार । तदा खिन्ना राधां भगवतः श्रीकृष्णस्य गुणान् तां प्रति निजगाद–

कृष्णमादिपुरुषं परिपूर्णदेवं लीलावतारमजमार्तिहरं जनानाम् ।
भूभूरिभारहरणाय सतां शुभाय जातं विनिन्दसि कथं सखी दुर्विनीते ।।

तदा सा गोपदेवता उक्तवती – यदाथः हरिः परेशः अत्रागमिष्यति तदा अहं तव वचनं सत्यं मन्ये । तदा कृष्णपरायणा सा देवी उक्तवती– वलमालिनः चेदागमो न भवेत्तर्हि अहं स्वं सर्वं धनं भवनं च तुभ्यं ददामि । अथ राधा समुत्थाय श्रीनन्दनन्दनं नत्वा आसने उपविश्य ध्यानस्तिमितलोचना बभूव ।

ततो माधवो माधवे मासि माधविभिः समाकुले वृन्दावने स्वयं रासेश्वरः रासं समारेभे। वैशाखमासि पञ्चम्यां शुभे चन्द्रोदये जाते रासेश्वर्या रासेश्वरः मनोहरयमुनोपवने रेमे । पुरा गोलोकादागता या भूमिः सा पद्मरागमयी बभूव । यमुनापुलिने मन्दगामी वायुः सहस्रदलपद्मानां रजः मुहुः विक्षेपयन् अलं बहति स्म । तदा मयूरपक्षभृत्मौलीस्रग्वीकुण्डलमण्डितः श्रीकृष्णः गोपीनां प्रीतिमावहन् वंशीरागैः वादयन् रासमण्डले रराज ।

एवं प्रकारेण गर्गसंहितायाम् एकोनविंशाध्यायादारभ्य चतुर्विंशाध्यायं यावद्भगवतः श्रीकृष्णस्य मनोहारिणी रासलीला वर्णिताऽस्ति । रासलीलायाः पठनेन श्रीकृष्णविषयकः एतज्ज्ञानं भवति यत् प्रेमरसस्यार्थो न दैहिकसुखं तत्तु अपूर्वरसानुभूतिः । गोप्यः परमभक्ताः, न लौकिकनार्य आसन् । तासां मध्ये काश्चिद्गोलोकवासिन्यः, पार्षदाख्या, गोबर्द्धननिवासिन्यः, निकुञ्जनिवासिन्यो, वाद्यतत्पराः नर्तक्य आसन् । ताः सर्वाः यूथीभूत्वा श्रीकृष्णसन्निधिमाजग्मुः । साक्षात् यमुना, गङ्गा तथा रमा, मधुमाधवी च यूथीभूत्वा समाययौ । तथैव विरजा, ललिता, विशाखा एवमष्टसखीनां, षोडशसखीनां, द्वात्रिंशच्च सखीनां यूथाः समाययुः । स्त्रीगणैः परिवृत्तः राधिकापतिः श्रीकृष्णरासरङ्गे रङ्गभूम्यां नट यथा ननर्त ।

एवं प्रकारेण गोपिभिः राधया च साकं विश्वात्मनः श्रीकृष्णस्य या प्रेमलीला सा नित्या शाश्वता एव । अस्याः लीलायाः प्रकटनानन्तरं श्रीकृष्णः मथुरां गतवान् । तदा सा प्रेमलीला समाप्ता नाभवत् । श्रीकृष्णवियोगे भृशं सन्तप्ताः गोप्यः कृष्णगुणगानपूर्वकं रुदति स्म ।



इति कृष्णं सञ्चिन्त्य गोपिकाः प्रेमविह्वलाः ।
उत्कण्ठितास्तारुरुदुर्मूर्च्छिता धरणी गता ।। (म.ख. १५)

श्रीकृष्णवियोगखिन्नाङ्गी राधा हरि विना समग्रं विश्वं शून्यवत् पश्यति स्म । श्रीकृष्णदर्शनोत्सुका सा तस्यागमनमपेक्ष्यमाणा सती कथयति स्म– आनन्दं श्रीव्रजराजनन्दनम्, द्रक्ष्यामि कस्मिन् समये घनप्रभम् ।।

कृष्णवियोगे आतुरः श्रीनन्दराजा सर्वं विषतुल्यममन्यत । श्रीकृष्णं मुहुः स्मारं स्मारं रोमाञ्चितो नन्दो स्वनेत्राम्बुजधाराभिः शय्या–वस्त्र–उपवर्हणादिकमार्द्रं करोति स्म । श्रीयशोदाऽपि श्रीकृष्णं विना जीवनं धारयितुं सर्वदा असमर्थाऽऽसीत् । अश्रुविसर्जनपूर्वकं मुहुः श्रीकृष्णलीलां सा स्मरति स्म ।

श्रीकृष्णः न केवलं यशोदानन्दयोः सर्वस्वमासीत् अपि तु स सर्वेषां व्रजजनानां जीवनधनं प्राणभूतं चासीत् । यथा निदाघतप्तस्य शीतलं जलं मृतस्य मानवस्यापि यथा पीयूषं मङ्गलदायकं तथा व्रजस्य जीवनं कृष्णदर्शनमासीत् । कृष्णं विना गोपाः क्षणं युगवत् विचारयन्ति स्म ।

स्वज्ञातिबन्धूनां सहायार्थं कर्त्तव्यानुरोधेन श्रीकृष्णः मथुरां गतवान् । तत्र गत्वा कंसादीनां विनाशसाधनं कृत्वा यादवानामशेषकल्याणं साधितवान् । परन्तु स प्राणाधिकान् व्रजजनान् न विस्मृतवान् । तेषां कुशलं द्रष्टुमुद्धवं व्रजं प्रेषयामास । अनेन स्पष्टं प्रतीयते यत् श्रीकृष्णो गोपाद्दूरे वर्तमानोऽपि सर्वदा तान् स्मरति स्म । कृष्णेन प्रेरित उद्धवः व्रजमागत्य व्रजवासिनां श्रीकृष्णप्रेमं दृष्ट्वा अभिभूतोऽभवत् । व्रजात् प्रत्यावर्त्य सः श्रीकृष्णाय तेषां दुःखं न्यवेदयत् । श्रीकृष्णोऽपि गोपीनां राधायाश्च परमं विरहं विज्ञाय व्रजमागत्य तां राधां ताः गोपीः चाश्वसितवान् ।

***

## श्रीमद्भागवतमहापुराणे महारासस्य वर्णनम्

*रश्मिप्रभा साहुः*
*आचार्यद्वितीयवर्षम्*

श्रीमद्भागवते सर्वमतसमन्वयात् शैव–शाक्त–वैष्णवादीनां समानरूपेणास्था विद्यते । श्रीमद्भागवतं हि धार्मिकाध्यात्मिकवाङ्मये एकं समुज्ज्वलं ग्रन्थरत्नमस्ति । अत्रादितोऽन्तपर्यन्तं प्राधान्येन भगवतः श्रीकृष्णस्य रुचिरं चरित्रचित्रणं वर्त्तते । सर्वेषां कर्मोपासनाज्ञानानां प्रतिपाद्यो भगवान् श्रीकृष्ण एवास्ति । अतः पुराणमिदं कल्पवृक्ष इव सर्वेषां सकलमनोरथपूरकं महापुराणमुच्यते ।

येन स्वजीवने एकवारमपि श्रीमद्भागवतं न श्रुतं तेन चाण्डालवत् गर्दभवच्च स्वजीवनं व्यर्थं कृतम् । निजजन्मना मातुर्दुःखदायकत्वाद् भारतभूश्च तेन कलङ्किता –

"आजन्ममात्रमपि येन शठेन किंचिच्चित्तं विधाय शुकशास्त्रकथा न पीता ।
चाण्डालवच्च खरवद् बत तेन नीतं मिथ्या स्वजन्म जननीजनिदुःखभाजा ।।"
श्री.भा.माहात्म्ये–अ.३/४२

श्रीमद्भागवते भक्तेः साङ्गोपाङ्गम् विवेचनमस्ति । महर्षिव्यासदेवविरचितस्य श्रीमद्भागवत-महापुराणस्य दशमस्कन्धस्य पूर्वार्द्धस्य त्रयस्त्रिंशाध्याये महारासलीलाविषये वर्णितम् अस्ति । यदि श्रीमद्भागवतमहापुराणं शरीरं भवति तर्हि दशमस्कन्धः तस्य हृदयं इतोऽपि रासलीला भवति अस्य भागवतशरीरस्य प्राणसदृशाः। प्रेमभक्तिमाध्यमेन संसारे जनाः किं न साधयन्ति। ज्ञानिनः तपस्या-ज्ञान-वैराग्यादिभिः नाना विधोपायैः अपि यस्य चरणरजः प्राप्तुं समर्थाः न भवन्ति। वेदाः उपनिषदः अपि यस्य स्वरूपं वर्णयितुं समर्थाः न भवन्ति परन्तु प्रेमभक्तिमाध्यमेन गोप्यः तेन भगवता श्रीकृष्णेन साकं रासक्रीडाकर्तुं समर्थाः भवन्ति।

महर्षिश्रीशुकदेवगोस्वामी राजानं परिक्षितं प्रति कथयति हे राजन् ! गोपीनां चित्ते यद् वियोगतापः आसीत् कृष्णवचः श्रुत्वा तत् दूरीभूतः। तत्र गोविन्दः अन्योऽन्यबद्धबाहुभिः स्त्रीरत्नैः सह रासक्रीडां प्रारभत । ततो रासमण्डले द्वयोः द्वयोः गोप्योः मध्ये प्रविष्टेन श्रीकृष्णेन रासोत्सवः सम्प्रवृतः। यं प्राप्य गोप्यःमामेव आलिङ्गितवान् इति मन्येरन्। देवाः स्वस्त्रीभिः सह महारासं द्रष्टुमागतवन्तः। तदा दुन्दुभयः नेदुः, पुष्पबृष्टयः पेतुः। सस्त्रीकाः गन्धर्वाः तद् यशः जगुः। तदा स्त्रीणां वलयनूपुरकिङ्किणीनां शब्दः रासमण्डले तुमुलो जातः। तत्र ताभिः कृष्णः स्वर्णमणिमध्ये नीलमणिरिव शुशुभे। तथा पादन्यासैः, हस्तचालनैः, हास्ययुक्तभ्रुविलासैः भज्यमानकुचपटैः कुण्डलैश्च स्वेदमुख्यः गोप्यः कृष्णेन सह मेघसमुहैः विद्युल्लता इव विरेजुः । यथोक्तं श्रीमद्भागवते–

"उच्चैर्जगुर्नृत्यमानाः रक्तकण्ठ्यो रतिप्रियाः ।
कृष्णाभिमर्शमुदिता यद्गीतेनेदमावृतम् ।। "श्री.भा.१०/३३/९

अर्थात् भगवन्तं श्रीकृष्णं प्रति तासां प्रेम तथा रतिः स्वकीयभावप्रदर्शनस्य मुख्यमाध्यमः आसीत् । ताः नृत्यमानाः रतिप्रियाः स्त्रीयः उच्चैः जगुः। श्रीकृष्णस्य अङ्गस्पर्शेन ताः गोप्यः भृशमानन्दिताः भवन्ति स्म। ताः गीतेन विश्वं पूरयन् रासमण्डले विरेजुः। तत्र गोप्यः कृष्णेन समं सुस्वरं जगुः। तत्र ताः साधुसाध्विति कृष्णेन पूजिताः बहुमानिताश्चाभवन्। काचिद् रासपरिश्रान्ता कृष्णस्य स्कन्धं बाहुना जग्राह। गण्डे गण्डं संन्दधत्यै कस्यै कृष्णः चर्वितं ताम्बुलं ददौ। काचित् नृत्यन्ती श्रान्ता सति कृष्णहस्तकमलं स्तनयोः अधात्। ततः गोप्यः कृष्णं परं कान्तं लब्ध्वा कृष्णहस्ताभ्यां



गृहीतकण्ठ्यः ताः गानंकृत्वा चिक्रीडिरे। एवं भगवान् गोपिभिः सह रेमे यथा बालः स्वप्रतिविम्बेन रमते। तत एवं कृष्णक्रीडितं वीक्ष्य कामार्दिताः खेचरस्त्रियः मुमुहुः। चन्द्रोऽपि स्वगणैः कामार्दितः सन् विस्मितः बभूवः। ततः कृष्णः यावन्त्यः गोपाङ्गनाः तावन्ति रूपाणि कृत्वा ताभिः सह रेमे। ततः क्रीडया श्रान्तानां गोपीनां मुखानि कृष्णः स्वकरेण प्रामृजत्। ततः गोप्यः अमृतायितहास्यावलोकनेन च कृष्णस्य सम्मानं कुर्वन्त्यः तस्य कर्माणि जगुः।

ततः कृष्णः श्रमदूरीकर्तुं ताभिः सह मालासम्बन्धिभिः भ्रमरैः अनुगतः सन् यमुनापुलिने विवेश । गजीभिः गज इव स कृष्णः अतिशयेन गोपिभिः परिषिच्यमानः पुष्पवृष्टिं कुर्वद्भिः देवैः इड्यमानः रराज । ततश्च कृष्णः यमुनायाः उपवने गोपिकाभिः वेष्टितः सन् गजीभिः गज इव चचार। एवं कृष्णः चन्द्रकिरणैः शोभिताः सर्वाः निशाः आत्मन्यवरुद्धसौरतः सन् सेवितवान् । राजोवाच – हे ब्रह्मन्! भगवान् धर्मसंस्थापनार्थं दुष्टानां नाशार्थम् अवतीर्णः तथा धर्ममार्गाणां वक्ताकर्त्ताऽपि सन् कथं परदाराभिमर्शनमाचरत् । किं च पूर्णकामोऽपि स निन्दितं कर्म कृतवान् । एनं च संशयं छिन्धि। प्रश्नं श्रुत्वा श्रीशुकदेवेनोक्तम्–

"धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसम् ।
तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा ।।" श्री.भा–१०/३३/३०

अर्थात् हे नृप! महतां धर्मव्यतिक्रमः साहसं च दृष्टम्। तत् तेषां तेजस्विनां दोषाय न स्यात् सर्वभुजो वह्नेः यथा। परमिदं महाकर्म समर्थः पुरुषः मनसापि नाचरेत्। यथा शिवं विना अन्यः विषं भक्षयन् किं न म्रीयते? महतां वचः सत्यम्। अतः ते वचसा यदुक्तं तदेव आचेरत्। एषां महतां कुशलाचरितेन स्वार्थः विपरितेन च अनर्थः। अतः सर्वप्राणिनां नियन्त्रकस्य हरेः कुशलाकुशलाभ्यां सम्वधः न चेति किं पुनः वक्तब्यम्। इदं व्रजस्त्रीभिः सह विष्णोः क्रीडितं यः श्रुणुयाद् वर्णयेच्च स हरौ भक्तिं प्राप्य हृद्रोगं कामनाञ्चाशुः त्यजति ।

जयतु संस्कृतं जयतु भारतम् ।

***

# पिवत भागवतं रसमालयम्

अक्षयकुमारदत्तः
आचार्यद्वितीयवर्षम्



किं पिबत ? भागवतं रसम् । किं नाम भागवतम् ?
श्रीमद्भागवतं पुराणममलं यद्वैष्णवानां प्रियं
यस्मिन् पारमहंस्यमेकममलं ज्ञानं परं गीयते ।
तत्र ज्ञानविरागभक्तिसहितं नैष्कर्म्यमाविष्कृतं
तच्छृण्वन् विपठन् विचारणपरो भक्त्या विमुच्येन्नरः ।।
(श्रीमद्भागवते १२.१३.१८)

शौनकं प्रति सूतोक्तौ भगवान् व्यासः श्रीमद्भागवतस्वरूपमेवं प्रतिपादयति । को नाम भागवतरसः ? निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतं (तत्रैव १.१.३) तं हि रसम्, आलयं (लयपर्यन्तम्) आजीवनं पिवत । भागवतरसो भक्तिरसो वा कथमनुभूयते, एतदर्थं मयाऽस्य स्वरूपं स्वकीयया बुद्ध्या प्रकाश्यते–

**देवेऽनन्यारतिः स्थायी विभावो भक्तसङ्गमः ।**
**उद्दीपनं प्रभोर्मूर्त्तिर्भक्तश्चालम्बनं मतः ।।**
**अनुभावश्च भक्तस्य प्रणतीत्यादिकाः क्रियाः ।**
**रोमाञ्चादिश्च सञ्चारी हेतुर्देवे स्वमर्पणम् ।।**
(गोस्वाम्यादिमते चैवं देवभक्तिरसोऽश्नुते)

अखिलमेव जगदिदं वर्तमानमतीतं भविष्यद्वाब्रह्मैव । द्व एव ब्रह्माणो रूपे मूर्तममूर्तञ्चा तच्च ब्रह्म सत्, चित्, आनन्दमयञ्च । जाते जगति वाल्मीकौ कविरित्यभिधाऽभवत् । कवीति ततो व्यासे- इत्युक्त्या व्यासोऽपि कविः । श्रीमद्भागवतं पुराणं सदपि काव्यम् । काव्यलक्ष्मदिशा तत्पद्यानि प्रमाणमत्र । स्वमिनोकरपात्रस्य भक्तिरसार्णवग्रन्थस्य जमनिकायां काशीसुमेरुपीठाधीश्वरजगद्गुरुशङ्कराचार्यपादाः श्रीमहेश्वरानन्दसरस्वतीमहाभागाः (पूर्वाश्रमे पं. महादेवशास्त्रीति नामानः) वदन्ति – ''शब्दार्थोभयालङ्कार अलङ्कृतदोषः कदम्बकलङ्कपङ्कातङ्कचुम्बितः विभावानुभावसञ्चारिनिकर–वृतिभ्यः च न अभिव्यज्यमाननिरावरणचैतन्य। आनन्दतुन्दिलविभाव अनुभावसञ्चारिसंवलितः रत्या आदिगुरुप्रगुणित- स्थायिभावरसरूपेति सहृदयश्लाध्याः पण्डितराजप्रभृतयः साहित्यसौहित्याः, महान्तो मधुसूदनसरस्वतीप्रमुखा दार्शनिकाश्च । "तदेतत्सौन्दर्यं मधुरमधुरं दोषविधुरं समग्राङ्गोपाङ्गं कविकुलमलक्षालनपरम् । सहस्त्रैर्भूतानामपि जननजानैरसुलभं कृपासिन्धोरेकप्रबलकरुणाप्राप्यममलम् ।।"



एवमेवाष्टभिः पद्यैः स्वकीयान् विचारान् प्रकटीकृत्यान्ततस्ते प्रणिगदन्ति" ।

**अवेद्ये प्राकाश्यव्यवहृतिसमर्हत्वसुभगे**
**परब्रह्मानन्दे स्वथ च सगुणे सुन्दरहरे ।**
**परे कारुण्याब्धौ निभृतमतयो भक्तिसरसाः**
**कृतार्था भूयासुस्तदिह यतिवर्या व्यवसिताः ।।१।।**

एवं श्रीमद्भागवतमाश्रित्य भक्तिरसविषयिणी अवधारणा शोधपत्रेऽस्मिन् प्रस्तु तिकृता विद्यते । वस्तुतः श्रीमद्भागवते ज्ञानाद्भक्तिरेव महीयसी, ज्ञानिन उद्धवस्य भक्ता गोपीः प्रति कथनमत्र प्रमाणम् – ''आसामहो चरणरेणुजुषामहं स्याम् ....." वन्दे नन्दव्रजस्त्रीणां पादरेणुरभीक्ष्णशः, यासां हरिकथोद्गीतं पुनाति भुवनत्रयमिति च । (श्रीमद्भा. १०/४७/६१/६३)

***

# श्रीकृष्णस्य अध्ययनम्

श्रद्धाञ्जलिदाशः
आचार्यद्वितीयवर्षम्

परमात्माश्रीकृष्णः तस्य वयसः पञ्चदशवर्षाणि यावत् पठनार्थं गुरुकुलादिकं न अगच्छत् । स्वीयान् पराक्रमान् गृहे तथा अङ्गणे च प्रदर्शयन् मातुः प्रीत्या अतिलालितः कश्चन कालः तेन यापितः ।

अनन्तरकाले प्रतिवेशिभिः बालकैः पक्षिमृगादिभिः च सह खेलनहसनादिकम् अभवत् । गीतनृत्यमल्लयुद्धादिकं, पर्वतानां तथा वृक्षाणाम् आरोहणं, नदीषु तरणं च कृत्वा सः तत्र रमते स्म ।

एवं कालयापनं न तस्य हिताय भवेत् तेन किमपि अध्येतव्यम् इति विचिन्त्य पितृभ्यां कश्चन निर्णयः स्वीकृतः। तदनुसारेण कृष्णः सान्दीपनिमहर्षेः आश्रमं प्रति प्रेषितः। स्वल्पेन एव कालेन आचार्येण श्रीकृष्णस्य बुद्धेः तीक्ष्णता अवगता । महर्षिणा शास्त्राणामध्ययनात् यावत् विज्ञानम् अर्जितं ततोऽपि अधिकं कृष्णेन जीवनानुभवेभ्यः अधीतमासीत् । अतः केवलं षण्णां मासानाम् अनन्तरं तस्य विद्याभ्यासः पूर्णः इति उद्घोष्य आशीर्भिः अनुगृह्य आचार्येण कृष्णः ततः प्रतिप्रेषितः ।

भवन्तः अवगच्छन्तु यत् पुस्तकेभ्यः प्राप्यमाण विज्ञानं कदापि पूर्णं न भवति, जीवनस्य व्यावहारिकाणाम् अनुभवानां सम्मुखीकरणेन लभ्यमानं विज्ञानम् एव जीवने प्राधान्यम् आवहति इति ।

निर्भिकाः भवन्तु इति अस्मान् बोधयान्ति ग्रन्थाः । परं कस्यचित् सर्पस्य दर्शनेन भीतैः अस्माभिः पलायनं क्रियते एव । परं कृष्णः तु सर्वेषु भीतिं जनयन्तं कालीयनामकं दुष्टसर्पं धैर्येण सम्मुखीकृतवान्, तस्य उग्रफणेषु नर्तनम् अकरोत् च । एतद् भवति श्रीकृष्णस्य अध्ययनम् ।

***

# श्रीमद्भागवते विराट्पुरुषवर्णनम्

*स्मरणिका प्रधानः*



महर्षिव्यासदेवेन प्रणीतेषु अष्टादशपुराणेषु श्रीमद्भागवतमहापुराणमस्ति अस्माकं सनातनसंस्कृतेः एकममूल्यं रत्नम् । अन्येषां महापुराणानां पृष्ठायां तथा साधुजनानां मुखेन यत् माहात्म्यमुक्तमस्ति तत् निश्चितरूपेण अपूर्णम् । कारणं श्रीमद्भागवतस्य महिमा साक्षाद्भगवतः महिमा एव। भगवतः महिमा कोऽपि जनः किञ्चित् शब्दमाध्यमेन वर्णयितुं समर्थः न भवति। एतत् श्रीमद्भागवतमस्ति साक्षाद्भगवतः वाङ्मयीमूर्तिः । यत् पुराणं ब्रह्मा-नारद-व्यासदेव-शुकदेवप्रभृतिभिः मुनिभिरपि विमृश्यते । परम्परानुक्रमेण अस्य पाठेन कलियुगीयमानवानां कृते च परमपदलाभः सुलभो भवति । महापुराणेऽस्मिन् ज्ञान-भक्ति-वैराग्य-सकामकर्म-निष्कामकर्म-साधनज्ञान-सिद्धज्ञान-साधनभक्ति-साध्यभक्तिः तथा सृष्टिप्रक्रिया अपि वर्णितास्ति । श्रीमद्भागवतस्य द्वितीयस्कन्धस्य पञ्चमाध्याये नारदब्रह्मदेवसंवादे नारदः ब्रह्मदेवं प्रति पृच्छति-

**यद्रूपं यदधिष्ठानं यतः सृष्टमिदं प्रभो ।**
**यत्संस्थं यत्परं यच्च तत्तत्त्वं वद तत्त्वतः ।।**

अथात् हे तात ! त्वं देवानां मध्ये श्रेष्ठतमः तथापि सृष्टेः कर्ता असि । अस्य संसारस्य स्वरूपं किम् ? तस्य आधारं किम् ? तस्य निर्माता कः ? अस्य प्रलयः कथं भवति ? एतत्कस्य अधीने अस्ति ? एतद्वस्तु वास्तवतः किम् - एतत्सर्वं मां तत्त्वतः वद। कारणमस्मिन् जगति नाम-रूप-गुणमाध्यमेन यत्किमपि ज्ञायते तेषां मध्ये एतत्किमपि सत्-असत्-उत्तम-मध्यम -अधमवस्तु चेति नास्ति यद्भवद्भिन्नं अन्यकस्यापि च माध्यमेन उत्पन्नं न भवति । अतः उक्तमस्ति-

**नाहं वेद परं ह्यस्मिन्नापरं न समं विभो ।**
**नामरूपगुणैर्भाव्यं सदसत्किञ्चिदन्यतः ।।**

पुनः सः उक्तवान्- एतत्सृष्टिः भगवतः शङ्का इव प्रचलति। पुनश्च अर्क-अग्नि-सोम-नक्षत्र-ग्रह-तारकाश्च भगवतः ज्योतिर्माध्यमेन ज्योतिः ददति। कारणं तस्य दुर्जयमायया मोहितः भूत्वा जनाः मां जगद्गुरु इति ब्रुवन्ति ।

नारायणं प्राप्तुं सकलयोगसाधनाः क्रियन्ते । सकलतपस्याऽपि साधकं भगवतः समीपं नयति । नारायणस्य प्राप्त्या एव सकलसाध्यस्य तथा साधकस्य परिसमाप्तिर्भवति । स द्रष्टाऽपि सर्वेषां नियामकः । स निर्विकारोऽपि सर्वेषामात्मा। सः एव मां सृजति। तस्य दृष्ट्या प्रचोदितोऽहं सृष्टिं सृजामि। सृष्टि-स्थिति-प्रलयकरणार्थं स्वयं भगवान् मायया यथाक्रमेण रज-सत्व-तमगुणसृष्टिं कृतवान्। पञ्चमहाभूतस्य



कारणरूपेण तामसादपि कुर्वाणः यदा अभवत् तदा नभः सृष्टिः अभवत्। काल, कर्म तथा स्वभावहेतोः वायोः यदा तेजसः सृष्टि अभवत् । तेजसः जलस्य सृष्टिः अभवत्। जलात् भूमेः सृष्टिः अभवत् । वैकारिक अहङ्कारात् मनसः तथा इन्द्रियाणां दशसंख्यकानां तदधिष्ठातृदेवानामुत्पत्तिरजायत।

एतत्पञ्चमहाभूत- इन्द्रिय-मन-सत्वादित्रिगुणानि सङ्गठितानि भूत्वा एकं शरीरं निर्मातुम् इच्छन्ति । तदनन्तरं भगवान् स्वशक्त्या एकं पुरुषनिर्माणं कृतवान् । यस्य सहस्राङ्घ्रि-बाहु-नेत्राननानि आसन् । तस्य ब्रह्मणः मुखात् अग्निः बाहोः क्षत्रियाः ऊरोः वैश्याः तथा च पद्भ्यां शूद्राः अजायन् । पुनश्च भूर्लोकः तस्य पद्भ्यां, नाभितः भुवर्लोकः, हृदयात् स्वर्लोकः तथा उरसः महर्लोकः प्रादुर्भुतः। तस्य ग्रीवायां जनलोकः स्तनद्वयोः तपलोकः, मूर्द्धायां सत्यलोकः तथा ब्रह्मलोकोऽपि विराजते। पुनश्च तस्य कट्याः अतलम्, उरुभ्यां वितलं, जानुभ्यां सुतलं तथा जङ्घाभ्यां तलातलं प्रकाशितम् । गुल्फाभ्यां महातलं, पदाभ्यां रसातलं तथा पादतलात् पातालस्य सृष्टिः अभवत् । पुनः उक्तमस्ति-

**भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकश्च नाभितः ।**
**स्वर्लोकः कल्पितो मुर्ध्ना इति वा लोककल्पना ।।**

***

# श्रीमद्भागवते भगवतः अवताराणां वर्णनम्

*सुस्मिता पाकलः*
*आचार्यद्वितीयवर्षम्*



धर्मस्य संस्थापनाय दुष्टानां विनाशाय साधूनां परिपालनाय च भगवान् इह जगति तले कदाचित् अवतरति। स एव परमेश्वरः ब्रह्मा-विष्णु-शिवरूपेण दृश्यमानजगतः सृष्टि-स्थिति-प्रलयकर्माणि करोति। इयं धरा यदा दुष्टैः बाधिता भवति शिष्टाश्चः यदा पराभूताः भवन्ति तदा भगवान् स्वांशेन कलया अवतरति। एवं शास्त्रेषु पुराणेषु च भगवतः बहवः अवताराः वर्णिताः सन्ति । श्रीमद्भागवते भगवतावतारविषये उक्तमस्ति यत्-

**यो वा अनन्तस्य गुणाननन्तानानुक्रमिष्यन् स तु बालबुद्धिः ।**
**रजांसि भूमेर्गणयेत् कथञ्चित् कालेन नैवाखिलशक्तिधाम्नः ।।**

परन्तु अस्मिन् प्रबन्धे श्रीमद्भागवते वर्णिताः कतिपयाः अवताराः यथा धिया प्रस्तूयते मया । नवयोगेश्वरान् प्रति राजा निमिः पूछति- हे महर्षय ! अस्मिन् संसारे हरिः यैः यैः

करिष्यति तानि नः ब्रूवन्तु । तदा नवयोगेश्वरेषु स्वच्छन्दजन्मभिः यानि यानि कर्माणि चक्रे करोति, करिष्यति तानि नः ब्रूवन्तु । तदा नवयोगेश्वरेषु अन्यतमः योगेश्वरः द्रुमिलः राजानं जनकं प्रति कथयति– हे नृप ! अनन्तस्य भगवतः अनन्तगुणाः भवन्ति । तान् गुणान् यः संख्यातुमिच्छति सः मन्दमतिः इति उच्यते । यतो हि भूमेः विद्वान् कथमपि रजांसि, महताकालेन गणयेत्। परन्तु भगवतः गुणाः अगणनीयाः भवन्ति। अत्र तान् गुणान् अहं संक्षेपेण वदामि। भगवान् सर्वादौ पञ्चभूतैः विराजं निर्माय तस्मिन् प्रविष्टः सन् पुरुषाभिधानं प्राप्तम्। यस्य एषः भुवनत्रयरूपदेव यस्य इन्द्रियैः जीवानाम् इन्द्रियाणि यत् सत्वात् ज्ञानं यस्य प्राणेभ्यः देहेन्द्रियकर्मशक्तयः समुत्पन्नाः सः अस्य सर्गे रजसा वृत्तः आदौ ब्रह्मा अभूत्। पालनार्थे सत्त्वेन विष्णुः अभूत्। अस्य नाशाय तमसा रुद्र अजायत। ततः धर्मात् मूर्त्यां भार्यायां नरनारायण इति रूपेण समुत्पन्नः ज्ञानयोगं नारदादिभ्यः उक्त्वा स्वयं च तपः चचार। सः अद्यापि आस्ते भारतभूमौ आस्ते। ईशः तपसा मम स्थानं ग्राहिष्यति इति इन्द्रः विशङ्क्य तस्य तपः नाशाय तस्य आश्रमं प्रति सगणमदनं प्रेषयामास। आश्रमे तिष्ठन्तं मदनमवलोक्य नरनारायणऋषिः इन्द्रस्य कर्म इति ज्ञात्वा तस्य मदनस्य स्वमतं विधाय स्वर्गस्य अलङ्कारभूताम् ऊर्वशीं दृष्ट्वा मदनेन सह स्वर्गं प्रति प्रेषयमास। मदनः स्वर्गं गत्वा इन्द्रं नत्वा सदसि देवानां शृण्वतां नारायणतपोबलम् उवाच। तदा विस्मितः इन्द्रः भयं प्राप्तः।

पुनः स नारायणः मुनिः ऋषीणां समक्षम् आत्मभोगम् अवदत् । तथा दत्तात्रेयः व्याससनकादयः एते भगवतः अवताराः एव। ततः भगवान् हयग्रीवावतारे पातालतः वेदान् आनीतवान्। तथा प्रलये मत्स्यः भूत्वा मनु–पृथिवी–औषधीनां च रक्षणं चक्रे। वाराहावतारेण महीम् उद्धरता भगवता हिरण्याक्षः हतः। कूर्मावतारेण समुद्रमन्थने भगवता स्वपृष्टे मन्दरः धृतः पुनः हरिशरणगतः गजेन्द्रः ग्राहाद् मोचितः तथा च करभपार्थं समिदाहरणे गोस्पदे निमग्नान् बालखिल्यान् उद्धृत्य इन्द्रं मोचयामास । तथा अनयाः दैत्यगृहे रुद्धाः देवस्त्रियः मोचयामास । तथा नृसिंहरूपेण प्रह्लादेन प्रार्थितः हिरण्यकशिपुः हतः। देवदैत्ययुद्धे सुरार्थे दैत्यान् हत्वा मन्वन्तरेषु भुवनानि कलाभिः अपालयत। पुनः वामनावतारं स्वीकृत्य भगवान् बलीं पृथिवीं याचयन् छलेन स्वर्गं हुत्वा इन्द्राय ददौ। तथा परशुरामः भूत्वा भगवान् एकविंशतिवारं भूमिं निःक्षत्रियां चकार। सीतापतिरामरूपेण समुद्रसेतुं निर्माय लङ्केश्वरं रावणं जघान। पुनः भूभारनाशाय ब्रह्मणा प्रार्थितः भगवान् यदुषु जातः सन् दुष्कराणि कर्माणि चकार। पुनः बुद्धावतारे बुद्धोः भूत्वा भगवान् यज्ञे दैत्यान् वादैः मोहयिष्यति। पुनः कलियुगे भगवान् कल्किः भूत्वा म्लेच्छप्रायान् शूद्रान् हनिष्यति । हे नृपः ! जगत्पतेः भगवत ईश्वरस्य एवं विधानि कर्माणि, जन्मानि, नामानि च सन्ति ।

***



# गोलोकधामरहस्यम्

*रूपश्रीबेहेरा*

*आचार्यप्रथमवर्षम्*

गर्गसंहितायां गोलोकखण्डे गोलोकविषयकं मनोमुग्धकरं रुचिरं वर्णनं सम्यक् प्रतिपादितमस्ति। तत्र वर्णितं यद् विरजायास्तीरे असंख्ययोतिषां मण्डलमध्ये सहस्रवदनस्य परस्य शेषस्योत्सङ्गे लोकवन्दितो गोलोको विद्यते । यत्र कलयतामीश्वरः कालोऽपि स्वप्रभावं विस्तारयितुं न शक्नोति। मायायाः प्रभावोऽपि यत्र नश्यति यत्राप्यहङ्कारादयो न तिष्ठन्ति पुनश्च त्रिगुणानां सत्तैव यत्र न तिष्ठति स गोलोकः सदैव लोकवन्द्यः । गोलोके गिरिराजो गोवर्द्धनो विराजते। कल्पवृक्षलतासंघैश्च मण्डितं रासमण्डलमत्रैवास्ति। कृष्णानदी स्वच्छन्दगत्या अत्रैव प्रवहति। दिव्यद्रुमलताकुञ्जैः वंशीवटैः शोभितं चित्रपक्षिभिः मधुपैः च पूरितं दिव्यं वृन्दावनम्। पुलिने शीतलो मन्दो वायुः सहस्रदलपद्मानां रजः मुहुर्विक्षेपयन् प्रवहति। रत्नाजिरेषु हारकेयूरभूषिताः सुन्दर्यः गोप्यः नूपुरं क्वणयन्त्यः इतस्ततः धावन्ति। द्वारि द्वारि मनोहराः पयस्विन्यः तरुण्यः वत्सैः मण्डिताः कोटिशो गावः शोभन्ते। वंशीधराः वेत्रहस्ताः गोपालाः सर्वत्र कृष्णलीलां प्रगायन्ति। संहितायाः गिरिराजखण्डे गोलोकोत्पत्तिविषये लिखितं यत्–

**गोलोकोत्पत्तिवृत्तान्तं शृणु राजन् महामते ।**
**चतुष्पदार्थदं** नृणामाद्यलीलासमन्वितम् ।।
**अनादिरात्मा पुरुषो निर्गुणः प्रकृतेः परः ।**
**परिपूर्णतमः साक्षाच्छ्रीकृष्णो भगवान् प्रभुः ।।**
**प्रत्यग्धामा स्वयं ज्योतिः रममाणो निरन्तरम् ।**
**यत्र कालः कलयतामीश्वरो धाम मानिमान् ।।** (गि.रा.ख. ९/३–५)

तस्मिन् गोलोके श्रीकृष्णवासोऽपि गर्गसंहितायां सुष्ठुः निर्दिष्टो यत् ज्योतिषां मण्डलमध्ये सहस्रदलपद्मं शोभितम् । तदूर्ध्वं षोडशदलम् । ततोऽष्टदलपङ्कजम् । तस्योपरि स्फुरद्दीर्घसोपान–त्रयमण्डितं दिव्यसिंहासनम् । यन्नाम पापं विनिहन्ति, या गृणतोऽपि मुक्तयः सुलभाः भवन्ति, पुनश्च यत्र वीथीषु साक्षान्मुक्तिः विचरति, बुधाः तां मथुरां श्रेष्ठेति वदन्ति। एवं प्रकारेण वृन्दावनवासानन्तरं श्रीकृष्णस्य क्रीडाभूमेः मथुरायाः विशदं वर्णनं तस्याः परममाहात्म्यं च श्रीमद्गर्गसंहितायां सम्यक् प्रदर्शितम् ।

***

# श्रीकृष्णावतारस्य अनन्यमहत्त्वम्

स्निग्धा मञ्जरी शतपथी



यदा यदा पृथिव्यां धर्मस्य ग्लानिर्भवति तथा अधर्मस्य अभ्युत्थानं भवति तदा भगवान् साधूनां परित्राणाय दुस्कृतानां पापिनां च विनाशाय धर्मसंस्थापनार्थाय अवतारं गृह्णाति। भगवान् मत्स्यावतारे पातालात् असुरेभ्यः वेदमुद्धरितवान्। कूर्मावतारे पृथिवीं धृतवान्। एवं प्रकारेण भगवतः अन्यानि अवताराणि विविधप्रयोजनयुक्तानि आसन् । परन्तु भगवतः श्रीकृष्णावतारः न केवलं कंसवधार्थमपि तु पञ्चतत्त्वानां विशोधनार्थमुद्दिष्टमासीत्। पञ्चतत्त्वानि भवन्ति क्षिति-अप् -तेज-मरुत्-व्योम- चेतानि ।

क्षितेः संस्कारः -

भगवान् श्रीकृष्णः क्षितेः शुद्ध्यर्थं गोपे मृदं भक्षितवान् । श्रीमद्भागवतानुसारेण एकदा क्रीडमानाः रामाद्याः गोपदारकाः कृष्णो मृदं भक्षितवान् इति मात्रे न्यवेदयन्। सा हितैषिणी यशोदा भयेन सम्भ्रान्तेक्षणं भगवन्तं श्रीकृष्णं करे गृहीत्वा अभाषत। कस्मात् भवान् मृदं भक्षितवान् इति। एते तावकाः कुमाराः ते अग्रजो बलरामोऽपि कथयति। तदनन्तरं भगवान् श्रीकृष्णोऽवदत् नाहं मृदं भक्षितवानम्ब! एते सर्वे मिथ्याभिशंसिनः सन्ति। यदि भवती सत्यं ज्ञातुमिच्छति तर्हि मे मुखं पश्य । ततः तस्य मुखे सा यशोदा समग्रविश्वं जीवजगत् , खं, दिशं, साद्रिद्वीपाब्धिभूगोलं, सवाय्वग्नीन्दुतारकं ज्योतिश्चक्रं, जल-तेज-वियत्-पवनं, वैकारिकाणीन्द्रियाणि, पञ्चतन्मात्राणि च ददृशे । इत्थं कृष्णः मृत् भक्षणेन तत्त्वमिदं संस्कारितवान्। अप् तत्त्वस्य संस्कारः-

पृथिव्याः जलतत्त्वं बहुदूषितमभवत् । जलतत्त्वसंस्कारकर्तुं भगवान् श्रीकृष्णः बाल्यावस्थायाम् एव कालियनिग्रहं कृतवान् । श्रीशुकदेवगोस्वामी श्रीमद्भागवते परीक्षितं प्रति कथयति यद्-गोपपुरं पुष्पसुगन्धैः, फलैः, पक्षिणां कूजनैः अत्यन्तं सुशोभितं आसीत् । तत्र यमुनानदी प्रवहति स्म। तस्यां यमुनानद्यां कालियनामकः विषधरसर्पः सपरिवारेण बहुयुगं यावत् वसति स्म । कालियस्य विषज्वालया उपरिगाः खगाः अपि मृताः सन्तः तस्मिन् जले पतन्ति स्म। विषोदह्रदस्य उर्मिमारुतेन अभिमर्शिताः तीरगाः प्राणिनः स्थावरजङ्गमाश्च म्रियन्ते स्म। खलसंयमनावतारः श्रीकृष्णः कालियस्य तत् कर्म दृष्ट्वा तं शमयितुं कदम्बमधिरुह्य विषोदे न्यपतत्। तदनन्तरं प्रेक्षणीयं सुकुमारघनावदातं श्रीवत्सपीतवसनं स्मितसुन्दरास्यं क्रीडन्तमकुतोभयं कमलोदराङ्घ्रिं श्रीकृष्णं दृष्ट्वा कालियः क्रोधेन मर्मसु सन्दंश्य भुजाभ्यां चछाद। भगवान् तं दण्डयितुं तस्य सहस्रफणानामुपरि ननर्त। तेन तस्य श्वासः अवरुद्धः अभवत्। मृत्युसन्निकटकालियं वीक्ष तस्य पत्न्यः समागत्य भगवतः श्रीकृष्णस्य स्तुतिं चक्रुः ।



पश्चात्तापं कृत्वा कालियः अपि स्तुतिं चकार। भगवान् पत्नीभिः सह कालियं आश्वास्य रमणकद्वीपं प्रेषितवान्। तदनन्तरं यमुनाजलं स्वादिष्टं विषरहितं जातम्। अनेन स जलतत्त्वस्याऽपि शुद्धिं चकार।

तेजसः संस्कारः - द्वापरयुगे तेजसि अपि दूषणत्वमासीत्। श्रीशुकदेवगोस्वामी परीक्षितं प्रति कथयति यद् - एकदा गोपवालकैः सह भगवान् गाः चारयितुं वनं जगाम। तत्र वार्त्तालापैः नानाविधाभिः क्रीडाभिः अन्यमनस्काः जाताः। अञ्जसा यदृच्छया वने दावाग्निः प्रज्वलितः अभवत्। समयेऽस्मिन् सर्वे गोपवालकाः गावः वत्साश्च दावाग्निना वेष्टिताः अभूवन्। ते उच्चस्वरेण रक्षार्थं श्रीकृष्णं निवेदयामासुः। तस्मिन् समये नन्दयशोदानन्दनः तान् चक्षुंषि निमीलयितुं प्रोवाच। ततः परं स दावाग्निपानं चकार। अनेन अग्नितत्त्वस्यापि शुद्धिः अजायत।

वायोः संस्कारः - द्वापरे तृणावर्त्तराक्षासेन वायुः दूषितो जातः। भगवान् श्रीकृष्णः तं मारितवान्। श्रीशुकदेवगोस्वामी परीक्षितं प्रति कथयति यद् -एकदा उत्थानिकोत्सवे अङ्कमारूढं सुतं सती यशोदा लालयति स्म। तस्मिन्नेव काले यशोदा तस्य शिशोः भगवतः श्रीकृष्णस्य गिरिकूटवत् गरिमाणं वोढुं न सेहे। तं भूमौ निधाय सा उत्थानिकोत्सवे सर्वकर्मसु निमग्ना संजाता। कंसप्रचोदितः भृत्यः तृणावर्त्तनामदैत्यः चक्रवातस्वरूपेण गोकुलं रेणुभिः आवृणोत्। तस्मात् स श्रीकृष्णं हरन् गते सति भगवतः भूरिभारं नीत्वा इतोपरि गन्तुं नाशक्नोद् । तस्य गलागृहीतो भगवान् उत्स्रष्टुं नाशक्नोद्। गलग्रहणेन निश्चेष्टः निर्गतलोचनः स राक्षसः अव्यक्तरावं कृत्वा सहबालो व्यसुर्व्रजे न्यपतत्। अनेन प्रकारेण वायोःसंस्कारः जातः।

व्योमसंस्कारः- यदा नभः दूषितः अभवत् तदा भगवान् श्रीकृष्णः व्योमासुरस्य वधं कृत्वा तं संस्कारितवान् । श्रीशुकदेवगोस्वामी परीक्षितं प्रति कथयति यद् एकदा स भगवान् गोपालकैः सह गाः चारयन् अद्रिसानुषु लीलायनक्रीडा तथा चोरपालादिक्रीडाः चक्रुः। तथा कतिपयाः बालकाः नृपाः तथा कतिपयाश्च मेषाः भूत्वा बिजह्रुः। मयपुत्रो महामायो व्योमो तत्र गोपालवेशं धृत्वा आगतः। स क्रीडया मेषयितान् बहून् बालान् अपहृतवान् । स महासुरः तान् नीत्वा गिरिदर्यां विनिक्षिप्य तद् द्वारं शिलया पिदधे । एवं प्रकारेण चतुर्पञ्चवालकाः अवशेषिताः। तस्य तत् कर्म विज्ञाय भगवान् तं वृकं हरिरिवौजसा जग्राह । स ग्रहणातुरः गिरीन्द्रसदृशः बली निजरूपमास्थायात्मानं विमोक्तुं इच्छन् परन्तु नाशक्नोद्। तदा भगवान् श्रीकृष्णः स्वस्य दौर्भ्यां निगृह्य तं महीतले पातयित्वा पशुवद् मारितवान्।

एवं प्रकारेण भगवान् श्रीकृष्णः पञ्चतत्त्वानां शुद्धिं कृतवान्। अतः श्रीकृष्णावतारः अन्यावतारेभ्यः अनन्यमहत्त्वं धत्ते।

***

# प्रकृतेः कालांशभूताः षड्देव्यः

*शुभस्मिता अगस्ति*
*आचार्यद्वितीयवर्षम्*



**प्रकृतिस्वरूपम्-** श्रीब्रह्मवैवर्तपुराणे प्रकृतेस्वरूपनिरूपणे प्रकृतेः भेदपञ्चकं प्रतिपादितम् । यथा अग्नौ दाहिकाशक्तिः चन्द्रे पद्मे रवौ च प्रभा युक्ता अस्ति। तथैव परमात्मनि प्रकृतिः संयुक्ता अस्ति। स्वर्णं विना स्वर्णकारः यथा कुण्डलं कर्तुम् अक्षमः यथा च मृदा विना कुलालः घटं कर्तुम् असमर्थः , तथा च तया विना ब्रह्म सृष्टिं कर्तुं च न क्षमः अस्ति। सर्वशक्तिस्वरूपा सा एव प्रकृतिः अस्ति। तया युक्तः परमात्मा सदा शक्तिमान् स्यात्। सृष्टिकाले योगेन परमात्मा आत्मानं द्विधा विभाजितवान्, दक्षिणार्द्धाङ्गात् पुमान् वामार्द्धाङ्गात् च प्रकृतिः संजाता। सृष्टिविधौ सा प्रकृतिः ब्रह्मस्वरूपा माया नित्या सनातनी च कथिता। सा च प्रकृतिः परमेश्वरस्य आज्ञया सृष्टिकार्यं कुरुते। सृष्टिकाले सा षड्विधरूपं गृहणति। तानि यथा - १. गङ्गा २. तुलसी ३. मनसा ४. देवसेना ५. मङ्गलचाण्डिका ६. काली च। एताः षड्देव्यः प्रकृतेः षट् कलाः निरूपिताः।

**१. गङ्गा** - भुवनपावनीदेवी गङ्गा विष्णुपादाब्जसम्भूता सनातनी अस्ति। पापीनां पापदाहाय सा इन्धनरूपिणी अस्ति। दर्शन - स्पर्शनपानैः सा जीवनां कृते निर्वाणदायिनी कथिता। गोलोकस्थान-गमनाय सुसोपानस्वरूपिणी पवित्ररूपा सा गङ्गा तीर्थानां सरितां च मध्ये श्रेष्ठा अस्ति। शम्भुमौलिजटामेरुमुक्तापंक्तिस्वरूपिणी सा भारते तपस्वीनां सद्यतपसम्पादिनी अस्ति। शुद्धसत्वस्वरूपिणी शङ्खपद्मक्षीरनीभा सा निर्मला निरङ्कारा साध्वी नारायणप्रिया अस्ति।

**२. तुलसी** - विष्णुकामिनी तुलसी विष्णुभुषणरूपा विष्णुपादस्थिता अस्ति। सा तपस्सङ्कल्पपूजादीनां सद्यसम्पादिनी अस्ति। सा च पुष्पाणां सारभूता पवित्रा सदापुण्यदा कथिता। दर्शनस्पर्शनाभ्यां सा च सद्य - निर्वाणदायिनी अस्ति। यत् पादपद्मसंस्पर्शात् वसुन्धरा पूज्या भवति,आत्मशुद्धये तीर्थानि तस्याः स्पर्श वाञ्छन्ति विश्वेषु यथा धर्मं विना सर्वं कर्म निष्पलम् अस्ति मुमुक्षुणां कामिनां सर्वकामदा सा देवी तुलसी तथैव अस्ति।

**३. मनसा** - कश्यपात्मजा मनसा शंङ्करस्य प्रियशिष्या महाज्ञानविशारदा च अस्ति। नागपूजिता नागेश्वरस्य अनन्तस्य भगिनी नागेश्वरी नागमाता सुन्दरी नागवाहिनी नागेन्द्रगणयुक्ता नागभूषणभूषिता नागेन्द्रवन्दिता सिद्धयोगिनी नागवासिनी विष्णुभक्ता विष्णुरूपा सा मनसा विष्णुपूजापरायणा अस्ति। तपः स्वरूपाः तपफलदात्री तपस्विनी सा मनसा दिव्यं त्रिलक्षवर्षं हरेः तपः आचरितवती। तपस्विनीषु तपस्विषु च पूज्या साः सर्वमन्त्राधिदेवी अस्ति।

***



# राधा उपाख्यानम्

*रश्मिता छाटोई*
*आचार्यप्रथमवर्षम्*

**राशब्दोच्चारणाद्युक्तो रातिमुक्तिं सुदुर्लभाम् ।**
**धाशब्दोच्चारणाद्दुर्गे धावत्येव हरेः पदम् ।।**
**रा इत्यादानवचनो धा च निर्वाणवाचकः ।**
**ततोऽवाप्नोति मुक्तिं च तेन राधा प्रकीर्तिता ।।**

पुरा रम्ये गोलोके वृन्दावने रासमण्डले सुरम्ये रत्नसिंहासने जगत्पतिः तस्थौ। स्वेच्छामयो भगवान् रमणोत्सुको बभूव। रिरंसोस्तस्य जगतां पत्युः तत् मल्लिकावने वामार्द्धाङ्गात् राधिका बभूव। अमूल्यरत्नाभरणा रत्नसिंहासनस्थिता वह्निशुद्धांशुकाधाना कोटिपूर्णशशिप्रभा तप्तकाञ्चनवर्णाभा सस्मिता सुदती शुद्धा शरत्पद्मनिभानना नवयौवना सा राधा सुन्दरीणाञ्च सुन्दरी आसीत्। तां दृष्ट्वा रसिकेश्वरः कामातुरः बभूव ।

रासमण्डले राधायाः लोमकूपतः गोपीसंघश्च बभूव। श्रीकृष्णलोमकूपेभ्यो गोपालाः बभूवुः। राधा स्वयं कृष्णपत्नी कृष्णवक्षस्थलस्थिता चास्ति। तस्यैव परमात्मनः सा प्राणाधिष्ठातृदेवी अस्ति। आब्रह्मस्तम्बपर्यन्तं सर्व मिथ्यैव वर्तते। राधेशः श्रीकृष्णः परं ब्रह्मास्ति। स च सर्वाद्यः निरीहः प्रकृतेः परः भक्तानुग्रहविग्रहः । बहुसौभाग्यसंयुता राधा तस्य इच्छामयस्य प्राणाधिकाऽस्ति। महाविष्णोः प्रसूः सा मूलप्रकृतिरीश्वरी स्मृता । मानिनीं राधिकां साधवः नित्यशः सेवन्ते। विष्णुतुल्यपराक्रमः द्वादशगोपानां प्रवरः रायाणः श्रीकृष्णांशः। सुदामशापात्सा देवी गोलोकात् महीम् आगत्य बृषभानुगृहे अवततार ।

एकदा शतशृङ्गाख्यगिरेरेकदेशे गोलोके वृन्दावने राधिकेशः विरजां गोपीं गृहीत्वा क्रीडां चकार । इत्थं मन्वन्तराणां लक्षः परिमितो कालः गतः। चतस्रः दूत्यः तज्ज्ञात्वा तद्विषये राधिकां प्राहुः। तच्छ्रुत्वा परमरुष्टा राधिका रथमारुह्य प्रियालिभिः सह कृष्णान्तिकं ययौ । कोलाहलं श्रुत्वा कृष्णपार्षदः गोपः सुदामा कृष्णं सावधानं कृत्वा गोपैः सार्द्धं पलायितः। भयेन कृष्णः विरजां विहाय तिरोधानं चकार। विरजा तत्क्षणं प्राणान् तत्याज। गोलोके सा सरिद्रूपा जाता। माहाभागा राधा रासमण्डलमागत्य तत्र विरजां कृष्णं च न दृष्ट्वा स्वगृहं पुनर्ययौ । ततः कृष्णः गोपालैः सह राधासमीपं जगाम । कृष्णं दृष्ट्वा सा देवी तं भर्त्सयामास । तदा सुदामा तां राधाञ्च शशाप। क्रुद्धा सा देवी सुदामम् आसुरीयोनिं गन्तुं शशाप। सुदामा तां भारते गोपी भवितुं शप्तवान्। तत्र शतं समा कृष्णविच्छेदो भविष्यतीति च कथितवान्। तत्र भगवान् कृष्णश्च भारावतरणं करिष्यतीति शप्त्वा सुदामा जननीं हरिं च प्रणम्य साश्रुनेत्रः जगाम ।

साश्रुनेत्राऽतिविह्वला राधा सुदामाविच्छेदे विरहकातरा बभूव । ततः सा अयोनिसम्भवा देवी कलावतीगर्भे अवतारं गृहीतवती । द्वादशाब्दे अतीते नवयौवनां तां दृष्ट्वा कलावती रायाणवैश्येन सह राधायाः सम्बन्धं चकार । तद्देहे छायां संस्थाप्य सा अन्तर्द्धानं बभूव । तस्य वैश्यस्य छायया सह विवाहः बभूव । शिशुरूपी जगत्पतिः गोकुले ववृधे । पुण्ये वृन्दावने वने कृष्णेन सह राधायाः विवाहः स्वयं विधिः कारयामास । तद्यथा ब्रह्मवैवर्त्तपुराणे–

**स्वप्ने राधापदाम्बुजं नहि पश्यन्ति वल्लभाः ।**
**स्वयं राधा हरेः क्रोडे छाया रायाणमन्दिरे ।।** (प्र.ख. ४६)

पुरा विधिः षष्टिवर्षसहस्त्राणि तपस्तेपे । भारावतरणे भारते नन्दगोकुले तपसः फलस्वरूपेण तत्पदाम्भोजं ददर्श । किञ्चित्कालं पुण्ये वृन्दावने गोलोकनाथः कृष्णः राधया सह भारते रेमे । ततः सुदामशापेन विच्छेदश्च बभूव । कृष्णः भूमेः भारावतरणं चकार । शताब्दे समतीते तीर्थयात्राप्रसङ्गतः तयोः मिलनं बभूव । ततः राधया सह कृष्णः गोलोकं जगाम । वृषभानुः नन्दश्च गोलोकं जग्मतुः । गोलोकात् समागताः गोप्यः गोपाश्च सर्वे गोलोकं जग्मुः ।

***

## द्वारकारहस्यम्



*सीमाराणी शतपथी*
*आचार्यप्रथमवर्षम्*

बहुद्वारणि सन्त्यत्र इति द्वारका । अर्थच्चतुवर्णानां मोक्षद्वाराणि विद्यन्ते यत्र सा द्वारका। पृथिव्यां यानि सप्तमोक्षदायकानि क्षेत्राणि विद्यन्ते तेषां मध्ये द्वारकापुरी अन्यतमा ।

अनेकेषु पुराणेषु भगवद्धाम्नः द्वारकायाः विस्तृतं वर्णनं समुपलभ्यते । तेषु हरिवंशं महाभारतं, श्रीमद्भागवतञ्च प्रमुखानि । विष्णुपुराणे ब्रह्माण्डमत्स्यपुराणादिषु चापि द्वारकाया सुन्दरं वर्णनमुपलभ्यते । सभापर्वणि वर्णितमस्ति यत् नरकवधानन्तरं यदा श्रीकृष्णः सत्यभामया सह स्वपुर्यां द्वारकाया प्रविवेश तदा सः द्वारकाया अलौकिकेन सौन्दर्येण तृप्तोऽभवत् ।

विष्णुपुराणे लिखितमस्ति यत् जरासन्धभयात् श्रीकृष्णः महोदधौ द्वारका विनिर्ममे । हरिवंशे द्वारकायाः विस्तृतं सुन्दरञ्च वर्णनमुपलभ्यते । तत्र लिखितं यत् रैवतस्य कुशस्थाली अतीव रमणीया । गर्गसंहितायां द्वारकारहस्यम्— श्रीमद्गर्गसंहितायां मथुराया अनन्तरं द्वारका एव श्रीकृष्णस्य आवासरूपेण बहुचर्चिता । संहितायाः द्वारकाखण्डे द्वारकायाः सम्पूर्णं वर्णनं समुपलभ्यते । संहितायां



द्वारकायाः परमहत्त्वं स्वीकृत्य सा श्रीकृष्णस्याङ्गं सम्भूता पुनश्च विश्वकर्मणा निर्मितेति अभिमता । मोक्षकांक्षिभिः द्वारकायां सर्ववैकुण्ठसम्पत्तयः प्रायन्ते ।

द्वारकायां लब्धपुण्यजनां वर्णनं केनापि न सम्भवम् । मेघधाराः कदाचित् गणयेत् परन्तु कृष्णपुर्या पुण्यानि न कोऽपि गणयते । यथा तीर्थानां मध्ये हरिवासरः फणिनां मध्ये फणीन्द्रः पुराणेषु भारतं देवेषु देवदेवः श्रीवासुदेवः श्रेष्ठ तथा समस्तपुरीषु द्वारावती प्रशस्ता पुण्यवती च । सा द्वारावती वैकुण्ठनीलाधिकृता मनोहरा भूमितले अतीव धन्या । अत्रैव श्रीकृष्णः यदुमण्डलीभिः वृतः सन् विराजते । पुनश्च अत्रेव श्रीकृष्णः साक्षात्परः पुरुषः चतुर्व्यूहं धृत्वा अलं विराजते ।

द्वारका सर्वेषां जनानां कृते मुक्तिप्रदा, महा अधोर्धनाशिनी च । ये जनाः माधवमासमध्ये द्वारकां प्रदक्षिणीकृत्य नमस्कुर्वन्ति इहामुत्रसर्वसिद्धयः तेषां पाणितले भवन्ति । यः धार्मिक, तीर्थाप्लुतः शुचिव्रतः अधः शयनशील, मौनव्रती, यवभोजी च भूत्वा चैत्रपौर्णमासादारभ्य वैशाखमध्ये द्वारकायां यात्रां करोति तस्य पुण्यसंख्यानां गणनां वेदमयो विधाताऽपि स्वचतुर्मुखै कर्तुं न शक्नोति ।

श्रीमद्गर्गसंहिताया द्वारकाखण्डे द्वारकायाः पुरातत्त्वं प्रदत्तम् । तत्र नवमाध्याये द्वारकायाः उत्पत्तिवृत्तान्तो वर्णितः । तद्यथा–

पुरा मनोः सुतः शर्यातिः चक्रवर्ती अभूत् । तस्योत्तमबर्हिरानतोभूरिशेणेति सर्वधर्मभूताम्बराः त्रयः पुत्राः आसन् । नृपः शर्यति उत्तमबर्हिषि पूर्वां, भूरिसेनाय दक्षिणां, पश्चिमामुत्तरां च दिशम् आनर्ताय ददौ । राजा शर्यातिः तस्य महीं चैर्येण परिपालयतुं पुत्रान् अपदिदेशः । पितुः वचः निशम्य आनर्तः मध्यमसुत इयं महि न शर्यातेः अपि तु सर्वाभूमिः श्रीकृष्णदेव–स्येवेति यदोक्तवान् तदा क्रुद्धः शर्यतिः पुत्रेण ज्ञानप्राप्तोऽपि रुषा आनर्तस्य स्वदेशाद् बहिष्कारं कृतवान् । पित्रा निष्कासित आनर्तः आब्धितटं गत्वा वर्षणमुयतं जले तपस्तेपे । तदा श्रीकृष्णः प्रसन्नो भूत्वा तस्मै दर्शनं प्रदाय शुभं शतयोजनं भूखण्डं दत्तवान् । तस्या नाम्ना तद्राज्यम् आनर्तेति विख्यातमभूत् ।

कुशस्थलीं विनिर्माय रेवतः तत्र राज्यं चकार । तस्य शतपुत्राः रेवती नाम्ना एकां कन्या च अभूवन् । एकदा रथमारुहा स कन्याया साकं योगबलेन ब्रह्मापुरं गत्वा रेवत्याः योग्यवरविषये ब्राह्मणं प्रप्रच्छ ।

***

# श्रीशिवपुराणस्य माहात्म्यम्

शुभ्रसङ्गीता सामल:
आचार्यप्रथमवर्षम्



**शान्ताकारं शिखरिशयनं नीलकण्ठं सुरेशं**
**विश्वाधारं स्फटिकसदृशं शुभ्रवर्णं शुभाङ्गम् ।**
**गौरीकान्तं त्रितयनयनं योगिभिर्ध्यानमग्नं**
**वन्दे शम्भुं भवभयहरं सर्वलोकैकनाथम् ।।**

शिवपुराणं सर्वसिद्धान्तनिष्पन्नं भक्तिविवर्द्धकं शिवतोपकारं महोत्तमं शास्त्रमस्ति । पुरा शास्त्रमिदं स्वयं शिवेन प्रोक्तमभूत् । कलियुगे पापग्रस्तानां जनानां हिताय सनत् कुमाररस्योपदेशात् भगवान् व्यासदेव: एतत्पुराणं रचितवान् । विशेषत: कलिजानां मन: शुद्धयै । एतस्मादपरं किमपि पुराणं नास्ति । एतत्पुराणं क्षितौ शिवरूपं ज्ञेयम्। अत: सर्वथा सादरं सेवनीयमस्ति । अस्य पुराणस्य पठनात् श्रवणात् च नरसत्तम: सद्य: शिवपदं लभते, प्रेम्णा अस्य पुराणस्य पठनं सर्वकामफलप्रदायकश्च भवति । शम्भो: पुराणस्य पठनात् श्रवणात् नर: निष्पापो जायते । इह सर्वान् भोगान् भुङ्क्त्वा अन्ते शिवलोकमवाप्नुयात् । शतराजसूयेनाग्निष्टोमेन यज्ञेन यत् पुण्यं लभते, तत्पुण्यं शम्भो: कथाश्रवणभात्रत: लभते । ये मनुष्या: नि:श्रेयसस्थानं गन्तुं वाञ्छन्ति ते सदा भक्त्या अमल शैवपुराणं शृण्वन्तु । मे मुहूर्त्तं तदर्द्धम् अथवा क्षणं च शिवपुराणं शृण्वन्ति तेषां कदापि दुर्गति: न भवेत्। तत्पुराणं शृण्वान: पुरुष: कर्माटवी दग्ध्वा संसारं निस्तरति । विशेषत: कलौ शैवपुराण श्रवणादृते पुंसां परो धर्मो नास्ति । शम्भो: पुराणश्रवणं तथा ब्रह्महत्यादिभ्य: नर: मुच्यते । तां संहितां भक्त्या पठन् य: श्राद्धे द्विजान् भोजयेत् तस्य सर्वे पितर: शम्भो: परमपदं यान्ति । तत्र अन्या अपि सर्वा: संहिता सर्वकामफलप्रदा: सन्ति । सप्तसंहिताविशिष्टं दिव्यं शिवसंज्ञकं पुराणं प्रथमं शिवेन कीर्तितमभूत् । पश्चात् शैवप्रवणेन व्यासेन च संगृहीतमभूत् । इदं पुराणं सकलजीवगुणोपकारं तापत्रयध्नमतुलं सतां शिवदं चास्ति । वेदान्तविजानमय: कैतव–विरहितधर्म इह प्रणीत: । पुराणेऽस्मिन् भक्तिज्ञानविषयकं वेदान्तवेद्यं शुद्धस्तु विशेषेण प्रवर्णितमस्ति । यो नित्यं शिवपुराणस्य श्लोकं श्लोकार्द्धमेव स्वमुखेन पठति स परमां गतिं प्राप्नोति । अन्तकाले यश्चैनं भक्तित: शृणुयात्, सुप्रसन्नो महेशान: तस्मै स्वं पदं प्रयच्छति । य: एतच्छिवपुराणं नित्यं पूजयेत्, स इहाखिलान् कामान् भुङ्क्त्वा अन्ते शिवपदं लभेत् । शैवसर्वस्वं तापत्रयाभिशमनं चतुर्वर्गफलप्रदं वेदेतिहास–शास्त्रेषु श्रेयस्करं परमसुखदम् अधौधविध्वंसकरं मन: शुद्धिविधायकं शिवसन्तोषप्रदमिदं पुराणं सतां सदा सेव्यमस्ति ।

***



# मधुरामहत्त्वम्

सुप्रिया साहु:
आचार्यप्रथमवर्षम्



मथ्यते पापराशिर्यया सा मथुरा तदुक्तम्—
**मथ्नाति सर्वपापानि ददाति परमं पदम् ।**
**उत्तमो हि नरो यत्र तेन सा मथुरा स्मृता ।।** (गोतमीयतन्त्रे– १४)

अनेकेषु पुराणेतिहासेषु मथुरायाः विषये विस्तृतवर्णनमुपलभ्यते । तेषु रामायणम्, श्रीमद्भागवतम्, वराहपुराणम्, विष्णुपुराणम्, पद्मपुराणम्, ब्रह्मवैवर्त्तपुराणमित्यादीनि प्रमुखानि। हरिवंशे, नारदीये, आग्नेयादिषु च मथुरा भगवतः श्रीकृष्णस्यावासरूपेण बहुचर्च्चिता । श्रीमद्गर्गसंहितायाः मथुराखण्डे मथुराविषये विस्तृतविचारः प्रदत्तः । सा भगवतः श्रीकृष्णस्य क्रीडाभूमिरिति बहुमानिता च ।

रामायणे उत्तरकाण्डे मथुरायाः उत्पत्तिविषये विस्तृतोल्लेखो विद्यते । कृतयुगे मधुनाम महासुरः सुसमाहितः तपसा आशुतोषं सन्तोष्य तस्मात् शूलमेकं प्राप्तवान् । तस्य लवणनामो महाचिर्यो दारुणः पुत्रोऽभवत् । तच्छूलं प्राप्य शिववरानुसारेण शूलहस्तः आत्मानमवध्यं मत्वा तापसान् विशेषरूपेण पीडयामास । तेनोद्विग्ना तापसाः रामचन्द्रं सर्वं निवेदयामासुः। श्रीरामाज्ञया शत्रुघ्नः देवानां सहायेन लवणं हत्वा राक्षसभयाज्जनशून्यां तां नगरीं यमुनायास्तीरे पुनः स्थापयामास ।

ब्रह्मपुराणे पातालखण्डे त्रिसप्ततितमाऽध्याये मथुरायाः विस्तृतं वर्णनं समुपलभ्यते । तत्र वर्णितं काश्यादयो यद्यपि अनेकाः मोक्षदायकाः पुर्यः सन्ति तथापि तासां मध्ये तु मथुरैव सर्वोत्तमा । सुरेन्द्र–नागेन्द्र–मुनीन्द्रसंस्तुता सा मथुरा अतीव मनोहरा । तत्र ये जायन्ते, म्रियन्ते अथवा तत्र येषां दाहादिसंस्कारो भवति ते सर्वे मुक्तिं प्राप्नुवन्ति । ते नराः सदैव धन्याः, ये अधुनापि मथुरायाः स्मरणं कुर्वन्ति । मथुरा परदेवताख्या सा पुरी स्वरूपेण स्वप्रकाशमाना सदैव दुर्ल्लभैव ।

**यस्मात्त्रैलोक्यमध्ये तु पृथिवी धन्येति विश्रुता ।**
**यस्मान्माथुरकं नाम** विष्णोरेकान्तवल्लभम् ।। (प.पु.पा.ख. ६९/१२)

ब्रह्मवैवर्त्तपुराणे कृष्णजन्मखण्डे द्विसप्ततितमेऽध्याये मथुरायाः वर्णनं प्रदत्तम् । सा मथुरातीव शोभायुक्ता मनोहरा च । शक्रपुरी निर्जित्य सापि अधिकशोभासमृद्धरूपा ।

अग्निपुराणेऽपि आश्चर्यजनकसूचना प्रदत्ता अस्ति यत् रामाज्ञया शत्रुघ्नः मथुरानगर्यां शैलुषस्य त्रिकोटिशपुत्रान् अमारयत् । प्रायशः द्विसहस्रवर्षेभ्यः एष मथुरापुरी कृष्णोपासनायास्तथा भागवतधर्मस्य केन्द्रभूमिरभवत् । नारदीये मथुरायाः परिमण्डलं विंशतियोजनं पुनश्च तन्मध्ये सर्वोत्तमा मथुरापुरी अवस्थितेति वर्णिता ।

गर्गसंहितायां मथुरारहस्यम्- श्रीमद्गर्गसंहितायाः मथुराखण्डे वृन्दावनखण्डे च मथुरायाः माहात्म्यं सम्यक् प्रदर्शितम् । मथुरायाः परमोत्कर्षसाधनपूर्वकं सा श्रीकृष्णस्याङ्गसम्भूता परमपूजनीयेति संहितायां सुनिर्णितो विचारः उपन्यस्तः । तस्याः परममहत्त्वस्वीकारपूर्वकं संहितायां सा बहुचर्चिता बहुपूजिता च । यथोक्तं गर्गसंहितायाम् ।

**पुरीश्वरीं कृष्णपुरीं व्रजेश्वरीं तीर्थश्वरीं यज्ञतपोनिधीश्वरीम् ।**
**मोक्षप्रदां धर्मधुरन्धरां मधोर्वने श्रीमथुरां नामाम्यहम् ।।**

(श्री.ग.सं.म.ख.अ. १५/३४)

मथुरानाथः स्वयं परिपूर्णः साक्षाद्भगवान् हरिः केशवः श्रीकृष्णः । वराहदेवः हं तत्र शत्रुघ्नः स्थापयामास स एव कपिलवराहः सर्वेषां वरप्रदः मन्त्रिवरः स्मृतः । मथुरायाः क्षेत्रपालः साक्षाद्भूतेश्वरः शिवः । महाविद्या चण्डिकादेवीदुर्गा सदा मथुरायाः रक्षां करोति । मथुरायाः वार्ताहरः नारदः सर्वां वार्तां श्रीकृष्णाय निवेदयति । मथुरायाः मध्ये सुभद्रा मथुरादेवी विराजते । चतुर्भुजा श्यामलाङ्गाः कृष्णापार्षदाः मथुरायां ये मृताः भवन्ति तान् विमानैः नेतुं सर्वदा सर्वत्र व्रजन्ति ।

श्रीकृष्णास्याङ्गात्सम्भूतेयं मथुरापुरी, यस्या एव दर्शनमात्रेण नराः कृतार्थाः भवन्ति । पुरा विधिः मथुरामुपेत्य निरस्त्रः सन् शतवर्षपर्यन्तं हरिं जपन् प्रवीणं सुतं स्वायम्भुवं प्राप्तवान् । भूतेश्वरः दिव्यं शतवर्षं मधुवने तपस्तप्त्वा कृष्णप्रसादात् मथुरायाः क्षेत्रपालो बभूव । इन्द्रः इन्द्रपदं, मनुपुत्रः सुर्हश्चः प्राप्तवन्तौ । मथुरायाः प्रभावाद् ध्रुवो विष्णुपदम्, अम्बरीषः मुक्तिं चालभताम् । मथुरायाः प्रभावात् कुबेरः निधिं, वरुणः पाशं जलपतित्वं च प्राप्तवन्तौ । रामचन्द्रः लवणासुरात् जयं, रघुराजः सिद्धिं चालभताम् । अत्र माधोर्वने तप्त्वा महासुरः मधुः बलिष्ठोऽभवत् । अत्र मधोर्वने तप्त्वा महासुरः मधुः बलिष्ठोऽभवत् ।

गर्गसंहितायाः वृन्दावनखण्डे मथुरायाः माहात्म्यं स्वयं भगवता वराहेण प्रतिपादितमस्ति। आदौ वराहकल्पे वराहरूपधृद्धरिः रसातलगतां महीं दंष्ट्रया समुद्धृत्य वारिमध्येषु यदा गच्छन्ताऽऽसीत् तदा सा पृथिवी जलपूर्णे जगति सपल्लवं स्थलमेकं दृष्ट्वा विस्मिताऽभूत् । तदा वराहदेवः कथितवान् यत् तदेव तस्य दिव्यं गोलोकसंयुक्तं मथुरामण्डलम् ।

संहितायाः मथुराखण्डे मथुरायाः माहात्म्यवर्णनप्रसङ्गे उल्लिखितं यत् मथुरायाः दर्शने भगवतः दर्शनफलं प्राप्यते । मथुरायां भक्षणं नैवेद्यं क्रियमाणं कर्मं हरिसेवा । गच्छत एव पदे पदे तीर्थयात्रायाः फलं सुलभम् । पादौ च धिग्यौ मधोर्वनं न गतौ । कदापि मथुरांन पश्यन्त्यौ दृशौ धिक् । कर्णौ धिक् यौ मथुरायाः नाम न श्रुतवन्तौ । वाक् च धिक् तया मनागपि मथुरायाः नामोच्चारणं न कृतम् ।



यन्नाम पापं विनिहन्ति, यां गृणतोऽपि मुक्तयः सुलभाः भवन्ति, पुनश्च यत्र वीथीषु साक्षान्मुक्तिः विचरति, बुधाः तां मथुरां श्रेष्ठेति वदन्ति ।

एवं प्रकारेण वृन्दावनवासानन्तरं श्रीकृष्णस्य क्रीडाभूमेः मथुरायाः विशदं वर्णनं तस्याः परममाहात्म्यं च श्रीमद्गर्गसंहितायां सम्यक् प्रदर्शितम् ।

***

## श्रीकृष्णस्य लीलारहस्यम्



*प्रतिमा साहुः*
*आचार्यप्रथमवर्षम्*

लीलाशब्दस्य व्युत्पत्तौ लीङ्-श्लेषणे इति धातोः सम्पदादित्वात् क्विप्-प्रत्यये कृते लीः शब्दः निष्पन्नो भवति । एवं लीयम् आनन्दं लातीति ला । ला आदाने इति धातोः क-प्रत्यये कृते लीलाशब्दः निष्पद्यते । नाट्यशास्त्रे लीलाशब्दः प्रियानुकरणार्थे उक्तो विद्यते । यथा चोक्तम्- प्रियानुकृति लीला इति । परन्तु अनुकृतिराहित्यात् भगवति तन्न सङ्गच्छते ।

लीलाशब्दस्य व्याख्यायां भगवान् वल्लभाचार्यः लिखति- लीलानाम विलासेच्छा, कार्यव्यतिरेकेण कृतिमात्रम् । न तया कृत्या बहिः कार्यं जायते, जनितमपि कार्यं नाभिप्रेतम्, नापि कर्तारि प्रयासं जनयति किन्तु अन्तःकरणे पूर्णानन्दस्तदुल्लासेन कार्यजननसदृशी क्रिया काचिदुपपद्यते ।

गर्गसंहितानुसारम् आप्तकामपूर्णकामोऽपि परब्रह्मश्रीकृष्णः लीलां कुरुते । सा च लीला द्विविधा- १. अप्रकटलीला, २. प्रकटलीला च ।

१. अप्रकटलीला- श्रीमद्गर्गसंहितायां गोलोकखण्डे परमेश्वरस्य भगवतः श्रीकृष्णस्य अप्रकटलीलायाः विशदं वर्णनं समुपलभ्यते । तत्र वर्णितमस्ति श्रीगोलोके साक्षात् गोलोकेशः श्रीकृष्णः राधया गोपिकाभिश्च साकं नित्यलीलां कुरुते । इयं लीला तस्य परमात्मनः विलासेच्छा अप्रकटलीला अस्ति या ब्रह्म-विष्णु-शिवादिभिः अगोचराऽस्ति । भगवतः श्रीकृष्णस्याप्रकटलीलाधाम्नो गोलोकस्य नित्यत्वं सम्पूर्णं महत्त्वञ्च संहितायां सुष्ठु प्रतिपादितम्। तस्या ह्लादिनीशक्त्याः राधायाः गोपीकानां गोपालानाञ्च नित्यत्वं संहितायां बहुचर्चितम् । एतत्सर्वं मया धामतत्त्वप्रसङ्गे प्रागेव आलोचितम् । इदानीं परमेश्वरस्य प्रकटलीलाविषये आलोच्यते ।

२. प्रकटलीला— अस्मिन् संसारे त्रितापदग्धः मानवः संसारधर्मैराबद्धः सन् आत्मानं मोचयितुं सर्वदा असमर्थो भवति । अतः जीवेषु दयां कृत्वा प्रणिमात्रस्योद्धारनिमित्तं स परमपुरुषः

कदाचित् आत्मानं प्रकटयति । दर्शन-स्पर्शन-भाषणाचरणादिभिः जीवान् स्वाभिमुखान् कारयति । तेषां सांसारिकं पाशञ्च छित्वा अन्ते परानन्दमयी मुक्तिं प्रददाति । तदुक्तं संहितायाम्–

मन्वन्तरेषु च युगेषु गतागतेषु कल्पेषु चांशकलया स्ववपुर्विभर्षि ।
अद्यैव धाम परिपूर्णतमं तनोषि धर्मं विधाय भुवि मङ्गलमातनोषि ।।
(ग.सं.गो.ख. ११)

पुनश्च सृष्टिकर्मणि यदा अव्यवस्था जायते, भूमिः दुर्जनानां पापाचारैः भाराक्रान्ता भवति, अधर्मः प्रवर्द्धते, गावः सीदन्ति, ब्राह्मणानां पीडनं भवति तदा भगवान् आत्मानं प्रकटयति । अधर्मं नाशयित्वा धर्मसंस्थापनं करोति । दुष्टान्नाशयित्वा स्वजनान् पालयति च । प्रकटलीलायाः उद्देश्यमेवं प्रतिपादितमस्ति श्रीमद्गर्गसंहितायाः गोलोकखण्डे यत्–

वेदा मे वचनं विप्राः मुखं गावस्तनुर्मम ।
अङ्गानि देवता यूयं साधवो ह्यसवो हृदि ।।
युगे युगे च वाध्यते यदा पाखण्डिभिर्जनैः ।
धर्मः क्रतूदयः साक्षात्तदात्मानं सृजाम्यहम् ।। (गो.ख. ३/१५,१६)

प्रकटलीलायां परःपुरुषः भुवि कदाचिदंशेन अंशांशेन, आवेशेन, कलया, पूर्णरूपेण अथवा परिपूर्णरूपेणावतरति । परिपूर्णतमस्य लक्षणं संहितायामेव निर्दिष्टमस्ति ।

यस्मिन् सर्वाणि तेजांसि विलीयन्ते स्वतेजसि ।
तं वदन्ति परे साक्षात्परिपूर्णतमं स्वयम् ।।

श्रीमद्गर्गसंहितायां चतुर्व्यूहवादस्य सम्पूर्णपरिप्रकाशः दृश्यते । चतुर्व्यूहानां सविशेष-महत्त्वमत्रैव निरूपितं वर्तते । प्रथमव्यूहस्य परमात्मवासुदेवस्य श्रीकृष्णेन साकं तादात्म्यं कृत्वा सङ्कर्षणप्रद्युम्नाऽनिरुद्धाख्यास्त्रयो व्यूहाः तस्यांशभूता इति संहितायां सिद्धान्तोऽस्ति । प्रकटलीलायां यदा श्रीकृष्णोऽवतरति तदा तेन साकं त्रयो व्यूहा अपि अवतरिताः भवन्ति । अतः संहितायां तेषां महत्त्वमपि सुष्ठु प्रतिपादितमस्ति । तद्यथा–

नमो भगवते तुभ्यं वासुदेवाय साक्षिणे ।
प्रद्युम्नायानिरुद्धाय नमः सङ्कर्षणाय च ।। (वि.ख. ११)

***



# वृन्दावनरहस्यम्



*राजलक्ष्मी साहुः*
*आचार्यप्रथमवर्षम्*

वृन्दावनशब्दस्योत्पत्तिः ब्रह्मवैवर्त्तपुराणे श्रीकृष्णजन्मखण्डे सप्तदशाध्याये एवंप्रकारेण वर्णिता यत्पुरा केदारनृपतेः वृन्दानाम्नी कन्यां महत्तपः कृतवती । तेन प्रसन्नो भूत्वा तत्पुरः श्रीकृष्णः आविर्बभूव । राधिकाकान्तं सुन्दरविग्रहं शान्तं दृष्ट्वा मोहिता सती सा पतिरूपेण तमेव वव्रे । तदा प्रसन्नः श्रीकृष्णः रहसि चिरं तया सह रेमे । सा च कृष्णेन सह गोलोकं जगाम । वृन्दा तपः कारणान्तःस्थलं जगति वृन्दावनं जातम् ।

"वृन्दा यत्र तपस्तेपे तत्तु वृन्दावनं स्मृतम् ।"

ब्रह्मवैवर्त्तपुराणस्य श्रीकृष्णजन्मखण्डेऽपि प्रोक्तमस्ति यत् कुशध्वजस्य कन्यां तुलसी हरिं प्राप्तुं तप आचरितवती । तस्याः तपसः स्थानमिदं वनं वृन्दावनमिति ख्यातम् । तद्यथा–

तस्याश्च तपसः स्थानं तदिदं च तपोधनम् ।
तेन वृन्दावनं नाम प्रवदन्ति मनीषिणः ।।

अनेकेषु पुराणेषु वृन्दावनविषये विस्तृतं वर्णनं समुपलभ्यते । श्रीमद्भागवते वृन्दावनस्य नित्यत्वं प्रतिपादितमस्ति । पुण्यवृन्दावनस्येदं वैशिष्ट्यं यद् ग्रीष्मर्तावपि वृन्दावनं वसन्तपरि-मण्डितमिव दृश्यते । इदं वनं भक्तानां परमवाञ्छनीयं चास्ति । श्रीवृन्दावनस्य तृणादीन्यपि सर्वाणि पूजनीयानि ।

पद्मपुराणे वृन्दावनस्य महत्त्वं बहुवर्णितम् । तत्र वर्णितमस्ति यत् वृन्दावनमव्ययं परमानन्दमयं गोविन्दस्य अक्षय परं धाम । वृन्दावननिवासिनः सर्वे नित्यानन्दरसाप्लुताः निरन्तरं हास्ययुक्ताश्च । यत्र रजः स्पर्शान्मुक्तिः भवति, तस्य स्थानस्य माहात्म्यविषये अधिकं किं वक्तव्यम् ?

विष्णुपुराणे वृन्दावनं भगवतः तिसृषु शक्तिषु सन्धिनीशक्तेः विलासरूपेण वर्णितम्। तच्चिन्मयवृन्दावनं भूलोके अवतरितमिति निरूपितम् ।

हरिवंशपुराणे वृन्दावनस्य चारुचित्रं प्रदत्तम् । तत्र वर्णितं यद् वृन्दावनमतीव रमणीयम्। कदम्बपादप्रायं यमुनातीरसंश्रितम्, स्निग्धशीतलानिलवनम् अतीव शुभप्रद । तद् वृन्दावनं सर्वर्तूनां निलयरूपम् । ब्रह्मवैवर्त्तपुराणे वृन्दावनविषये विस्तृतवर्णनमुपलभ्यते । आदिवाराहे वृन्दावनं भगवतः प्रियधामरूपेण प्रदर्शितम् । तद्वृन्दावनं सर्वपातकनाशनम्, सुरम्यम्, सुप्रतीतम्, देवदानवदुर्लभमिति वर्णितम् ।

लघुभागवतामृते लिखितमस्ति यद् भगवान् श्रीकृष्णो वृन्दावनं परित्यज्य न कुत्रापि गच्छति,

किन्तु द्विभुजरूपेण एकया गोप्याराधया साकं क्रीडन् तत्र नित्यमेव राजते । पुराणेषु, उपनिषत्सु, वैष्णवग्रन्थेषु च भगवतः श्रीकृष्णस्य निजधामरूपेण वृन्दावनं सुप्रसिद्धमस्ति।

**गर्गसंहितायां वृन्दावनरहस्यम्**— गोकुलादनन्तरं श्रीवृन्दावनं भगवतः श्रीकृष्णस्य सर्वश्रेष्ठधामरूपेण श्रीमद्गर्गसंहितायां बहुवर्णितम् । संहितायाः वृन्दावनखण्डे प्रथमाध्याये वृन्दावनस्यावस्थितिं निर्दिश्योल्लेखितं विद्यते यत् बर्हिषदः प्रागुदीच्यां यदो पुरात् पश्चिमस्यां मथुरामण्डले व्रजोऽवस्थितः । चतुरशीतिक्रोशैः विस्तारयुक्तस्तद् व्रजः मथुरामण्डले एव वर्तते । तत्र सर्वेभ्यः वनेभ्यः श्रीकृष्णस्य लीलाक्रीडं मनोहरं श्रीवृन्दावनं सर्वश्रेष्ठवनम् । वैकुण्ठत् परलोको नाभूत् न च भविष्यति परन्तु एकं वृन्दावनं यद् वैकुण्ठादपि परात्परम्। तत्र गोवर्द्धनं नाम गिरिराजः यमुनायाः निकटे मङ्गलायनं पुलिनं च शोभते । तत्र बृहत् सानुनन्दीश्वरादयः गिरयः विराजन्ते । पशूनां हितकरं गोपगोपीनां गवां च सेव्यं मनोहरं लताकुञ्जावृतं तद्वनं वृन्दावनमिति स्मृतम् ।

कृष्णोऽपि स्वहृदयाह्लादकारमिदं वनं त्यक्त्वाऽन्यत् स्थातुं नैच्छति । यत्र वृन्दावनं, यमुनानदी, गिरिगोवर्द्धनश्च नास्ति तत्स्थानं राधिकायै कदापि सुखकरं न । तदुक्तं श्रीराधिकया यत्–

यत्र वृन्दावनं नास्ति यत्र च यमुनानदी ।
यत्र गोवर्द्धनो नास्ति तत्र मे न मनः सुखम् ।।

वृन्दावनं न केवलं सिद्धाश्रमादपि तु सर्वेभ्यः रमणीयेभ्यः स्थलेभ्यः अधिकमुपयुक्तम् अधिकं रमणीयं च निर्णितम् ।

***



# श्रीमद्भागवते भक्तिस्वरूपम्

*प्रो. श्रीमती मिनतिरथ*

श्रीमद्भागवतं समस्तानां शास्त्राणां मुकुटमणिः, पुराणानां मुर्धन्यम्, वैष्णवानां परमधनम्, भगवद्भक्तानां सर्वस्वम्, परमहंसानां निर्मलज्ञाननि–निधिर्निगद्यते । पुराणमिदं भक्तिरसस्य मूलस्रोतः अस्ति । पुराणस्यास्य प्रभावोऽन्यैः पुराणैः साकं पद्मपुराणे स्कन्दपुराणे च पर्य्याप्तमात्रायां परिलक्ष्यते । भगवद्भक्तिप्रदायकस्य पुराणस्यास्य माहात्म्यं यथा चोक्तं पद्मपुराणे –

**कृष्णप्राप्तिकरं शश्वत् प्रेमानन्दफलप्रदम् ।**
**श्रीमद्भागवतं शास्त्रं कलौ कीरेण भाषितम् ।।**

(प.पु.उ.ख.)

श्रीमद्भागवतानुसारं मानवमात्रस्य कल्याणार्थ त्रयो मार्गा निर्दिष्टाः सन्ति – ज्ञानमार्गः, कर्ममार्गः, भक्तिमार्गश्चेति । तददतिरिक्तः न कश्चनान्यो मार्गो विद्यते । एषु मार्गेषु ज्ञानमार्गः दुःसाध्योऽस्ति, कर्ममार्गः कष्टसाध्यो वर्त्तते, किन्तु भक्तिमार्ग एव सर्वसुलभः सरलश्चास्ति । अत एवोक्तम् –

**योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया ।**
**ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित् ।।**

(भा.११/२०/६)

तथा च – **न युज्यमानया भक्त्या भगवत्यखिलात्मनि ।**
**सदृशोऽस्ति शिवः पन्था योगिनां ब्रह्मसिद्धये ।।**

(भा.३/२५/१६)

भक्तिशब्दस्य विश्लेषणेन ज्ञायते यत् "भज् सेवायामिति धातोः क्तिन्प्रत्ययेन निष्पन्नो भक्तिशब्दार्थः प्रेम्णा भगवत्सेवैवास्ति ।

भक्त्या भगवतः वास्तविकं स्वरूपं विज्ञाय परमपुरुषार्थनिर्वाणपदं प्राप्तुं शक्यते । भक्तेः प्रभावः यथा श्रीमद्भागवते –

**तदा पुमान् मुक्तसमस्तबन्धन-**
**स्तद्भावभावानुकृताशयाकृतिः ।**
**निर्दग्धबीजानुशयो महीयसा**
**भक्तिप्रभावेण समेत्यधोक्षजम् ।**

**अधोऽक्षजालम्भमिहाशुमात्मनः**
**शरीरिणः संसृतिचक्रशातनम् ।**
**सद्ब्रह्मनिर्वाणसुखं विदुर्बुधाः**
**ततो भजध्वं हृदये हृदीश्वरम् ।।**
(श्री.भा.७/७/३५/३७)

भक्तिः सर्वक्लेशनिवारिका तथेश्वरप्राप्तेः सहजं साधनमस्ति । श्रीमद्भागवतस्य तृतीयस्कन्धे भगवता कपिलेन स्वमात्रे देवहूत्यै य उपदेशो दत्तोऽस्ति तत्र प्रतिपादितमस्ति यत् निष्कामभक्तिद्वारा जीवस्य बन्धनकारकाः क्लेशाः नश्यन्ति ।

श्रीमद्भागवतस्य प्रथमस्कन्धे भगवत्कथायाः श्रवणकीर्त्तनयोर्निः-श्रेयस्करत्वं भक्तेः माहात्म्यं च वर्णितं विद्यते । तद्यथा –

**वासुदेवे भगवति भक्तियोगः प्रयोजितः ।**
**जनयत्याशु वैराग्यं ज्ञानं च यदहैतुकम् ।।**
(श्री.भा. १/२/७)

तत्र तृतीयस्कन्धे कलिपदेवहूतिसंवादे भगवता कपिलेन भक्तियोगस्य श्रेष्ठत्वं निरूपितमस्ति । तद्यथा –

**विसृज्य सर्वानन्यांश्च मामेव विश्वतोमुखम् ।**
**भजन्त्यनन्यया भक्त्या तान्मृत्योरतिपारये ।।**
(भा.३.२६.४३-४४)

श्रीमद्भागवते सप्तमस्कन्धे भक्तेः भेदः प्रतिपादितो वर्तते । सा तु नवधा । श्रवणभक्तिः, कीर्त्तनभक्तिः, स्मरणभक्तिः, पादसेवनभक्तिः, अर्चनभक्तिः, वन्दनभक्तिः, सख्यभक्तिः, दास्यभक्तिः, विष्णौ आत्मनिवेदनभक्तिश्च । तद्यथा–

**श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनम् ।**
**अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ।।**
(श्री.भा. ७/५/२३-२४)

यदा भक्तस्य हृदि भगवद्विषयकोऽनुरागः जायते, तदा तस्य सकला चेष्टा भगवद्भावमयी भवति । स आत्मनः सर्वं कार्यं भगवत्कार्यं मत्वा सम्पादयति । तथा चोक्तं श्रीमद्भागवतस्य नवमस्कन्धे चतुर्थोध्याये –



**स वै मनः कृष्णचरणारविन्दयोर्वचांसि वैकुण्ठगुणानुवर्णने ।**
**करौ हरेर्मन्दिरमार्जनादिषु श्रुतिं चकाराच्युतसत्कथोदये ।।**
**मुकुन्दलिङ्गालयदर्शने दृशौ तद्भृत्यगात्रस्पर्शेऽङ्गसङ्गम् ।**
**घ्राणं च तत्पादसरोजसौरभे श्रीमत्तुलस्या रसनां तदर्पिते ।।**
**पादौ हरेः क्षेत्रपदानुसर्पणे शिरो हृषीकेशपदाभिवन्दने ।**
**कामं च दास्येन तु कामकाम्यया यथोत्तमश्लोकजनाश्रया रतिः ।।**
**एवं सदा कर्मकलापमात्मनः परेऽधियज्ञे भगवत्यधोक्षजे ।**
**सर्वात्मभावं विदधम् महीमिमां तन्निष्ठविप्राभिहितः शशास ह ।।**
(श्रीम.भा.६/४/१८-२२)

श्रीमद्भगवते दशमस्कन्धे भक्तेः चरमोत्कर्षः साधितः विद्यते । तत्र एकोनत्रिंशतमे अध्याये वेणुनादं श्रुत्वागतानां गोपीनां श्रीकृष्णेन सह संवादे गोपीनां भगवद्भक्तिः प्रदर्शिता विद्यते । भगवति श्रीकृष्णे तासां परमात्मबुद्धिः आसीत् । अतः ताः सर्वविषयान् संत्यज्य तस्य पादमूलं सेवितवत्यः । तद्यथा –

**मैवं विभोऽर्हसि भवान् गदितुं नृशंसं**
**संत्यज्य सर्वविषयांस्तव पादमूलम् ।**
**भक्ता भजस्व दूरवग्रह मा त्यजास्मान्**
**देवो यथाऽऽदिपुरुषो भजते मुमुक्षून् ।।**
**यत्पत्यपत्यसुहृदामनुवृत्तिरङ्ग-**
**स्त्रीणां स्वधर्म इति धर्मविदा त्वयोक्तम् ।**
**अस्त्वेवमेतदुपदेशपदे त्वयीशे**
**प्रेष्ठा भवांस्तनुभृतां किल बन्धुरात्मा ।।**
(श्री.भा.-१०/२८/३१-३२)

तथा च गोपीगीते –

**न खलु गोपिकानन्दनो भवानखिलदेहिनानन्तरात्मदृक् ।**
**विखनसार्थितो विश्वगुप्तये सत्त्व उदेयिवान् सात्त्वनां कुले ।।**
(श्री.भा. – १०/३१)

भगवत्प्राप्तिनिमित्तं भक्तिर्हि सर्वोत्कृष्टं साधनमिति निरूपितमस्ति श्रीमद्भागवते दशमस्कन्धे ज्ञानिश्रेष्ठेनाप्युद्धवेन । तद्यथा –

ज्ञानव्रततपोहोमजपस्वाध्यायसंयमैः ।
श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते ।।
(भा. - १०/५७/२४)

कथं भगवति निश्चलां भक्तिं लभते जनः ? तदुपादयो निर्दिष्टो वर्तते श्रीमद्भागवते एकादशस्कन्धे ।

तद्यथा –

श्रद्धालुर्मे कथाः शृण्वन् सुभद्रालोकपावनीः ।
गायन्ननुस्मरन् कर्म जन्म चाभिनयन् मुहुः ।।
तदर्थे धर्मकामार्थानाचरन् मदपाश्रयः ।
लभते निश्चलां भक्तिं मय्युद्धवसनातने ।।

तथा च –

मत्कथाश्रवणे श्रद्धा मदनुध्यानमुद्धव ।
सर्वलोभोपहरणं दास्येनात्मनिवेदनम् ।।
मज्जन्मकर्मकथनं मम पर्वानुमोदनम् ।
गीतताण्डववादित्रगोष्ठीभिर्मद्गृहोत्सवः ।।
यद् यदिष्टतमं लोके यच्चातिप्रियमात्मनः ।
तत्तन्निवेदयेन्मह्यं तदानन्त्याय कल्पते ।।
इष्टापूर्त्तेन मामेवं यो यजेत समाहितः ।
लभते मयि सद्भक्तिं मत्स्मृतिः साधुसेवया ।।
(भा.११-१२/३५-३६/४७)

श्रीमद्भागवतानुसारेण आत्मिकसुखलाभाय भगवद्भक्त्यतिरिक्तः कोऽपि सुलभः कल्याणकारी च मार्गो नास्ति । अनेन मार्गेण एव जीव आत्मिकशान्तिं परानन्दमयीमुक्तिञ्चाप्नोतीति श्रीमद्भागवते बहुलतया प्रतिपादितं विद्यते । तद्यथा–

स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे ।
अहैतुक्यप्रतिहता यथाऽऽत्मा सम्प्रसीदति ।।
(भा.१/२/६)

***



# श्रीमद्भागवते वेदतात्पर्यनिर्णयः

*डॉ. मखलेशकुमारः*
*सहायकाचार्यः*

भारतीयसंस्कृत्योपरिवैदिकविचारधारायाः व्यापकः प्रभावः अस्ति। सर्वेषां प्राणिनां कर्त्तव्यविषये वेदाः सृष्टेरादिकालतः एव पथप्रदर्शकाः सन्ति। सर्वासु परिस्थितिषु मनुष्यः सफलतापूर्वकं स्वजीवनस्य सर्वाङ्गीर्णं विकासं कुर्यादित्येवं वेदस्य लक्ष्यमिति। वेदानां विश्ववाङ्मये महत्वपूर्णं स्थानं सर्वविदितमेव। लौकिकः पारलौकिको वा कश्चन विषयः एवं विधः नास्ति यस्य दर्शनं वेदेषु न स्यात् । अनन्तशक्तिना सर्वव्यापकेन ब्रह्मणा एव वेदवाण्याः विस्तारं कृतम् । यथा कमलनालेषु उर्णा दृश्यते तथैव एषा वेदवाणी अपि प्राणिनामन्तर्हृदि अनाहतनादरूपेण प्रादुर्भवति । तद्यथा–

**मयोपबृंहितं भूम्ना ब्रह्मणा अनन्तशक्तिना ।**
**भूतेषु घोषरूपेण विसेषूर्णेव लक्ष्यते ।।** (श्रीमद्भागवते ११.२१.३७)

श्रीमद्भागवतमहापुराणस्य एकादशस्कन्धे उद्धवं प्रति उपदिशता भगवता श्रीकृष्णेन वेदवाङमयस्य गाम्भीर्यं श्लोकेऽस्मिन् समुद्घोषितम् । वेदस्य अपरं नाम शब्दब्रह्म एव । वेदाः भगवतः मूर्तिभूताः, अत एव सूरयः मूर्तिभूते तस्मिन् शब्दब्रह्मणि अपि ब्रह्मवत् समानरूपेण मुह्यन्ति । एतत् शब्दब्रह्म परा-पश्यन्ती-मध्यमेति रूपेण प्राणेन्द्रियमनोमयं विद्यते । समुद्रवत् वेदः अपि सीमारहितः, अतीवगभीरः, अनुलङ्घनीयश्चास्ति । एतस्मात् कारणादेव जैमिन्यादयः महर्षयः अपि वेदवाङमयस्य तात्पर्यमवगन्तुं समर्थाः न भवन्ति। तद्यथा–

**शब्दब्रह्म सुदुर्बोधं प्राणेन्द्रियमनोमयम्।**
**अनन्तपारं गम्भीरं दुर्विगाह्यं समुद्रवत् ।।**(श्रीमद्भागवते ११.११.३६)

भगवान् श्रीकृष्णः उद्धवमुपदिशन् कथयति यद्वेदवाणी कर्मकाण्डेषु कस्य विधानं करोति ? उपासनाकाण्डे कान् देवान् वर्णयति ? ज्ञानकाण्डे कान् समुपवर्ण्य विकल्पयतीति, लोके मां विना अन्यः कोऽपि वेदवाण्याः रहस्यमेतत् न जानाति। हे उद्धव! एषा वेदवाणी कर्मोपासनाज्ञानकाण्डेषु माम् एव विधत्ते अभिधत्ते विकल्प्यापोह्यते च। सम्पूर्णस्य वेदस्य एतद् एव तात्पर्यमस्ति। या वेदवाणी मामाधारीकृत्य भेदान् उपकल्पयति, तदन्तरं मायामात्रमिति प्रकाश्य सर्वान्ते सर्वान् निषेधयित्वा मयि एव शान्ता भवति। अन्तेऽधिष्ठानरूपेण केवलमहमेव अवशिष्यः भवामि। तद्यथा–

**किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेत्।**
**इत्यस्या हृदयं लोके नान्यो मद् वेद कश्चन् ।।**
**मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्यते त्वहम् ।**

**एतावान् सर्ववेदार्थः शब्द आस्थाय मां भिदाम् ।।**
**मायामात्रमनूद्यान्ते प्रतिसिध्य प्रसीदति।।** (श्रीमद्भागवते ११.२१.४२.४३)

सर्वे जनाः वेदस्य तात्पर्यं जानीयुः इति धिया महर्षिणा वेदव्यासेन अष्टादशपुराणानि महाभारतञ्च रचितम्। अतएव पुराणानि वेदोपबृंहकानि इति । वेदेषु संक्षिप्तरूपेण वर्णितानां तथ्यानां विशदीकरणं विद्यते पुराणवाङ्मये। पुराणेषु तिलकभूतं श्रीमद्भागवतमिति। एतस्य पुराणस्य भागवतीकथा वेदोपनिषदः सारभूता। तद्यथा-

**वेदोपनिषदां साराज्जाता भागवती कथा।**
**अत्युत्तमा ततो भाति पृथग्भूता फलाकृतिः।।**
(पद्मपुराणीयश्रीमद्भागवतमाहात्म्ये-२.६७)

श्रीमद्भागवतं नाम महापुराणमेतद् सम्पूर्णस्य वेदवाङ्मयस्य सारभूतमिति। सारः फलमिति स्वीक्रियते विद्वद्भिः। तथा च सर्वे वेदाः पुराणेषु प्रतिष्ठित्त्वात, फलत्वेन स्वीकरणत्वात् पुराणस्यास्य महत्वं वेदादपि अधिकमिति। वेदार्थादपि पुराणवाङ्मयस्य प्रतिष्ठा बहुविद्यते,यतो हि पुराणेषु च प्राप्याप्राप्यशाखायुताः सर्वे वेदाः प्रतिष्ठिताः सन्ति । उक्तञ्च-

**वेदार्थादधिकं मन्ये पुराणार्थं वरानने।**
**वेदाः प्रतिष्ठिताः सर्वे पुराणे नात्र संशयः।।** (नारदपुराणे, उ०-२.२७)

जानीमः वयं यदस्माकं भारतीया संस्कृतिः वेदेभ्यः एव समारभते। प्रायः सर्वेषु पुराणेषु वेदस्योपबृंहणं सम्प्राप्यते तथापि भागवतमहापुराणे तु श्लोके-श्लोके पदे-पदे वेदार्थः प्रतिपादितः। कथितञ्च पद्मपुराणे-

**तत्कथासु तु वेदार्थः श्लोके-श्लोके पदे-पदे ।**
(पद्मपुराणीयश्रीमद्भागवतमाहात्म्ये-२.६५)

श्रीमद्भागवतस्य मङ्गलाचरणे एवं निगदितं यत् सत्स्वरूपः परमात्मा एव मनसा आदिकवये ब्रह्मणे सर्वप्रथमं वेदज्ञानं सुप्रकाशितवान्। पुराणमेतद् निगमकल्पतरोर्गलितं फलमिति सुनिश्चितम्। निगमो नाम वेदः, सः वेदः कल्पतरुः, तस्य कल्पतरोः फलमेतद् पुराणम्। वेदस्वरूपिणः कल्पवृक्षस्य फलत्वादस्य पुराणस्योत्कृष्टता वरीवर्ति।

**निगमकल्पतरोर्गलितं फलं**
**शुकमुखादमृतद्रवसंयुतम्।**
**पिबत भागवतं रसमालयं**
**मुहुरहो रसिका भुवि भावुकाः।।** (श्रीमद्भागवते ११.११.३६)

वेदानां विलष्टता, दुरूहता, विषयगम्भीरता च सर्वविदितमेव। तथा च वेदस्याध्ययने समेषां समानाधिकारःअपि नास्ति। अतः भगवान् एव अनधिकारिणां प्राणिनां कल्याणार्थं प्रतिद्वापरं व्यासरूपेणावतीर्य



अष्टादशपुराणानि महाभारतञ्च विरचयति। भगवता व्यासेन एतेषु पुराणेषु वेदार्थः सरलया सुबोधया भाषया च सर्वजनग्राह्यः क्रियते। "पुराणं पञ्चमो वेदः" उक्तिरेषा पुराणवाङ्मयस्य महत्वं वर्धयति। पञ्चमवेदत्वेन स्वीकृते पुराणवाङ्मये श्रीमद्भागवतमहापुराणं मूर्ध्नि विराजते । एतादृशे वेदप्रतिपादके महिमशालिने महापुराणे सुदुरूहस्य वेदस्याभिप्रायः सुविवेचितः वर्तते एव। एकादशस्कन्धे राजा निमेः कर्मयोगविषयकप्रश्नस्य समाधानं प्रयच्छन् योगीश्वरः आविर्होत्रः कथयति यत् कर्माकर्मविकर्मेति कर्मणः त्रयः भेदाः सन्ति। तेषु विहितकर्मणः करणं कर्म, विहितस्य कर्मणः अकरणं अकर्म तथा च निषिद्धाचरणं निषेधितस्य कर्मणः करणं विकर्मेति कथ्यते। वेदप्रतिपादितोऽयं सिद्धान्तः लौकिकः नास्ति। वेदः अपौरुषेयः, अत एव अस्याभिप्रायं ज्ञातुं सूरयः अपि समर्थाः न भवन्ति। उक्तञ्च-

**कर्माकर्मविकर्मेति वेदवादो न लौकिकः।**
**वेदस्य चेश्वरात्मत्वात् तत्र मुह्यन्ति सूरयः।।** (श्रीमद्भागवते ११.३.४३)

वेदेषु कर्मोपासनाज्ञानभेदेन त्रयः काण्डा प्रतिपादिताः। एतेषु त्रिषु काण्डेषु प्रतिपाद्यः विषयः भवति ब्रह्मात्मयोः ऐक्यमिति। भगवान् श्रीकृष्णः स्वयमेव कथयति यत् ऋषयः परोक्षवादिनः, ममापि परोक्षं प्रियमिति।अतएव वेदाः परोक्षतया विषयमेतद् प्रतिपादयन्ति। तद्यथा-

**वेदा ब्रह्मात्मविषयास्त्रिकाण्डविषया इमे।**
**परोक्षवादा ऋषयः परोक्षं मम च प्रियम् ।।**(श्रीमद्भागवते ११.२१.३५)

अयं वेदः परोक्षवादः । अन्यथा स्थितोऽर्थः सगोपयितुमन्यथा कृत्वोच्यते सः परोक्षवादः इति। परोक्षवादः वेदः कर्ममोक्षाय कर्माणि विधत्ते। यथा मिष्ठान्नस्य लोभं प्रदर्श्य बालाय औषधं प्रदीयते तद्वत् वेदो अपि बालानामनुशासनं विदधाति। बालमौषधं पाययितुं पिता तं बालं प्रति कथयति, यद्येतत्पिबसि तदा ते लड्डुकं दास्यामीति प्रलोभ्य औषधं पाययति, लड्डुकादिकञ्च ददाति च। अत्र औषधपानं, तत्प्रभावेण बालस्य रोगनिवृतिः एवोद्देश्यमिति। लड्डुकदानं तु गौणं, परन्तु तेन विना बालस्य औषधपाने प्रवृत्तिरेव न भवति। लड्डुकस्य प्रलोभनं केवलं रुच्युत्पादनार्थमेव। तथैव मोक्षप्रतिबन्धकभूतानां पुण्यपापत्मकानां कर्मणां निवृत्यर्थमेव वेदः बालानां ज्ञानरहितानां कृते अनुशासनं करोति अर्थात् रुच्युत्पादनार्थ प्रलोभनं यथा भवति तथा कर्माणि विधत्ते। प्रलोभनं नाम स्वर्गादिफलम्। अत एव स्वर्गादिफलैः प्रलोभयन् वेदःकर्माणि कारयति, तत्तत्फलमपि प्रयच्छति, परन्तु स्वर्गादिफलं नास्ति परमपुरुषार्थः, अपितु संसारदुःखनिवृत्तिपूर्वकं परमानन्दस्वरूपभगवत्सम्प्राप्तिरेव लक्ष्यम् । यदि कश्चिदज्ञः अजितेन्द्रियश्च वेदोक्तं नाचरति चेत् तर्हि सःविकर्मणि एव रतः भवति। यतो हि कर्म करणेन विना कोऽपि क्षणमपि स्थातुं न शक्नोति । वेदोक्तकर्मरहितः मनुष्यः विकर्मणि एव रतः भवति। एवं निषिद्धाचरणलक्षणेन विकर्मणा अधर्मेण वा सः मृत्योरनन्तरं मृत्युमेवोपैति । तस्य मुक्तिः न सम्भवति। अतिदयालुः भगवान् वेदः मनुष्याणामिन्द्रियपरायणतां निवारणाय बालानुद्दिश्य कर्मणः फलदर्शनेन रोचयन् तथा विधत्ते यथा

प्रातरारभ्य कर्माणि कुर्वाणाः सन् ते विकर्मण्यवसरं न प्राप्नुयुः । एवं प्रकारेण फलासक्तिरहितं भगवत्यर्पितं यथा भवति तथा कर्म कुर्वाणाः जनाः अन्तःकरणविशुद्धिपूर्वकं नैष्कर्म्यरूपां सिद्धिं लभन्ते। अत्र कर्माणि क्रियमाणे सति फलसम्प्राप्तिः, पुनः बन्धः इति आशङ्क्यते चेत् तत्तु न भवति। यतो हि फलश्रुतिः अर्थात् फलस्य श्रवणं केवलं कर्मणि रुच्युत्पादनार्थमेव। यथा औषधपाने प्रवृत्यर्थमेव लड्डुकदानादिकं श्राव्यते। अत्र तल्लड्डुकं बालस्य आसक्तयैव दीयते नान्यथा। अतः स्पष्टं यत् फलासक्तया कृतमेव कर्म फलं ददाति, अकामेन कृतं कर्म फलवान् न भवति। अतः वेदोक्तं कुर्वाणाः मनुष्याः नैष्कर्म्यां सिद्धिं प्राप्य संसारसागरात् विमुच्यन्ते। तद्यथा-

**परोक्षवादो वेदोऽयं बालानामनुशासनम्।**
**कर्ममोक्षाय कर्माणि विधत्ते ह्यगदं यथा।।**
**नाचरेद् यस्तु वेदोक्तं स्वमज्ञोऽजितेन्द्रियः।**
**विकर्मणा ह्यधर्मेण मृत्योर्मृत्युमुपैति सः।।**
**वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पितमीश्वरे ।।**
**नैष्कर्म्यां लभते सिद्धिं रोचनार्था फलश्रुतिः।।**

(श्रीमद्भागवते ११.३.४३-४६)

भगवान् श्रीकृष्णः उद्धवं वदति यत् स्वर्गादिरूपफलस्य वर्णनकर्त्री श्रुतिरपि स्वर्गसम्प्राप्तिः परमपुरुषार्थः इति न प्रतिपादयति। सा तु भैषज्यरोचनमिव मोक्षविवक्षया बहिर्मुखानां पुरुषाणां कृतेऽन्तःकरणशुद्धिपूर्वकं कर्मसु रुच्युत्पादनार्थञ्च ९स्वर्गकामो यजेदिति" वर्णयति। एवमेतादृशैः वचनैः कर्मणि रुचिमुत्पाद्य निवृत्तिरेवाभीष्टम् । तद्यथा

**इष्ट्वेह देवता यज्ञैर्गत्वा रंस्यामहे दिवि।**
**तस्यान्त इह भूयास्म महाशाला महाकुलाः।** (श्रीमद्भागवते ११.२१.३३)

स्वात्मनः अनर्थास्पदेषु सांसारिकविषयोपभोगेषु स्वप्राणेषु बन्धुबान्धवेषु च जन्मकालादेव मनुष्याः आसक्ताः भवन्ति। स्वकीयं स्वार्थमजानानाः एते स्वर्गादिप्रदं वेदवचनं सत्यमिति स्वीकृत्य तदेवाचरन् देवादिषु योनिषु भ्रमन् तदनन्तरं घोरान्धकारयुतं वृक्षयोनिं प्राप्नुवन्ति। तर्हि एवं स्वतः एव आसाक्तान् तादृशान् जनान् कः विद्वान्, वेदः वा पुनः तान् तेषु योजयिष्यति? वस्तुतस्तु वेदाभिप्रायरहिताः कर्मवादिनः अज्ञाः मनुष्याः स्वर्गादिकं सत्यं मत्वा स्वस्य कल्याणकारिमार्गात् विचलिताः सन् पथभ्रष्टाः भवन्ति। तद्यथा-

**उत्पत्त्यैव हि कामेषु प्राणेषु स्वजनेषु च।**
**आसक्तमनसो मर्त्या आत्मनोऽनर्थहेतुषु।।**



**न तानविदुषः स्वार्थं भ्राम्यतो वृजिनाध्वनि।**
**कथं युञ्जात् पुनस्तेषु तांस्तमो विशतो बुधः।।**
**एवं व्यवसितं केचिदविज्ञाय कुबुद्धयः।**
**फलश्रुतिं कुसुमितां न वेदज्ञा वदन्ति हि ।।**(श्रीमद्भागवते ११.२१.२४-२६)

सर्वासु योनिषु मनुष्यशरीरमेवैतादृशं येन भगवन्तं प्राप्तुं शक्यते। भगवत्कृपया मनुष्यशरीरमेतद् सम्प्राप्य यः न तरति संसारसागरं सः आत्महा भवति। कथितञ्च-

**नृदेहमाद्यं सुलभं सुदुर्लभं,**
**प्लवं सुकल्पं गुरुकर्णधारम्।**
**मयानुकूलेन नभस्वतेरितं**
**पुमान् भवाब्धिं न तरेत् स आत्महा।।**(श्रीमद्भागवते ११.२०.१७)

वेदाभिप्रायं निरूपयन् योगीश्वरः चमसः राजानं निमिं प्रति वदति यत् यज्ञोपवीतसंस्कारेण वेदाध्ययनेन च ब्राह्मण-क्षत्रिय-वैश्याः त्रिवर्णाः भगवतः सन्निकटं प्राप्य अपि वेदतात्पर्यज्ञानाभावेन प्रायः मुह्यन्ति। कर्मरहस्यमजान्तः एतादृशाः मनुष्याः वस्तुतस्तु मूर्खाः,परन्त्वात्मानं पण्डितमामनन्ति। वेदाभिप्रायात् बहुदूरे विद्यमानाः एते सर्वे मैथुन्यपरेषु गृहेष्वासक्ताः सन् स्त्रियः उपासन्ते । माध्व्या गिरोत्सुकाः श्रद्धारहिताः वेदतात्पर्यज्ञानहीनाः एते विधिरहितमदक्षिणं यागं कुर्वन् क्षुधानिवृत्तये शरीरपुष्टये जिह्वासुखं सम्प्राप्तये च निरीहान् पशून् घ्नन्ति। तद्यथा-

**वदन्ति तेऽन्योन्यमुपासितस्त्रियो**
**गृहेषु मैथुन्यपरेषु चाशिषः।**
**यजन्त्यसृष्टान्नविधानदक्षिणं**
**वृत्यै परं घ्नन्ति पशूनतद्विदः।।** (श्रीमद्भागवते ११.५.८)

आकाशवद् सर्वव्यापकः भगवान् सर्वेषु प्राणिष्वन्तर्यामिरूपेण शश्वद् विद्यमानः वर्तते। परन्तु वेदप्रतिपादितमिदं तथ्यमश्रुत्वा जनाः परस्परं मनोरथानां वार्ताः कुर्वन्ति। वेदाः विधिवाक्येन जनान् तत्रैव योजयन्ति यत्र मनुष्याणां स्वाभाविकी प्रवृत्तिः न भवति । दृश्यते संसारे व्यवायामिषमद्यसेवा मनुष्येषु नित्या इति। तात्पर्यमिदं यत् मैथुने मांसभक्षणे सुरापाने च जनानां स्वाभाविकी प्रवृत्तिः भवति। नैसर्गिकप्रवृत्तौ सति ९एतद्विधिवाक्यमिति" एतादृशः प्रश्नः एव नास्ति। परन्तु एतेषां सेवनं विवाहयज्ञसौत्रामणियागेन च यद्व्यवस्थितं तत्तु उच्छृंखलप्रवृत्तेः नियंत्रणार्थं मर्यादायाः स्थापनार्थं च । वस्तुतस्तु एतेभ्यः सर्वेभ्यः निवृत्तिरेव वेदानामभीष्टमिति। तद्यथा-

**सर्वेषु शश्वत्तनुभृत्स्ववस्थितं**
**यथा खमात्मानमभीष्टमीश्वरम्।**

वेदोपगीतं च न श्रृण्वतेऽबुधाः
मनोरथानां प्रवदन्ति वार्तया।।
लोके व्यवायामिषमद्यसेवा
नित्यास्तु जन्तोर्न हि तत्र चोदना।
व्यवस्थितिस्तेषु विवाहयज्ञ-
सुराग्रहैरासु निवृत्तिरिष्टा।।(श्रीमद्भागवते ११.५.१०-११)

धनस्य एकमात्रं फलं धर्मः एव। धर्मेणैव परं तत्त्वस्य सविज्ञानं ज्ञानं जायते। ज्ञाने जाते सति तस्मिन् निष्ठा प्रादुर्भवति। तया निष्ठया परमा शान्तिरवाप्यते। वेदस्य तात्पर्यज्ञानरहितैः मनुष्यैः धर्ममात्रप्रयोजनयुतस्य शान्तिप्रदायकस्य च धनस्योपयोगः गृहसम्बद्धस्वार्थपूर्तये कामोपभोगाय वा क्रियन्ते। एवं कुर्वन् ते कलेवरस्य दुरन्तवीर्यं मृत्युं न पश्यन्ति। तद्यथा-

धनं च धर्मैकफलं यतो वै
ज्ञानं सविज्ञानमनुप्रशान्ति।
गृहेषु युञ्जन्ति कलेवरस्य
मृत्युं न पश्यन्ति दुरन्तवीर्यम्।।(श्रीमद्भागवते ११.५.१२)

व्यवायामिषमद्यसेवायाः कृतेः विवाहयज्ञसुराग्रहैः या व्यवस्थितिः परिकल्पिता तस्याः स्वार्थानुकूलमर्थं विधाय अकर्मणि रताः भवन्ति मनुष्याः। नास्ति वेदानामिदं तात्पर्यम्। वेदाभिप्रायरहिताः न जानन्ति एतस्य रहस्यमिति। श्रीमद्भागवते सुस्पष्टं कृतं यत् सौत्रामणियागे सुरापानं न क्रियते,अपितु तत्र घ्राणभक्षणमेव विहितम्, अर्थात सुरायाः नासिकया गन्धमात्रं स्वीकरणीयमिति। यज्ञेषु यत् पशोरालभनं विहितं तत्रापि हिंसा न अपितु स्पर्शमात्रस्य विधानं विद्यते। एवम्प्रकारेण व्यवायस्याज्ञा अपीन्द्रियसुखाय विषयोपभोगाय च नास्ति, अपितु सन्तानोत्पत्त्या धार्मिकपरम्परायाः रक्षायै एव अस्ति, परन्तु वेदवाण्याः अर्थवादे दत्तावधानाः जनाः स्वकीयं विशुद्धमेनं धर्मं न जानन्ति। तद्यथा-

यत् घ्राणभक्षो विहितः सुराया-
स्तथा पशोरालभनं न हिंसा।
एवं व्यवायः प्रजया न रत्या
इमं विशुद्धं न विदुः स्वधर्मम्।। (श्रीमद्भागवते ११.५.१३)

***




वैष्णवानां मानं विदधती प्रो. मिनतिरथः


छात्राणां संगीतगानम्


भागवतपारायणोत्सवे छात्राः छात्राश्च


विशिष्टव्याख्यानमालायाम् अतिथयः



जातीयचर्यासत्रे छात्राः अध्यापकाश्च


पत्रिकायाः प्रथमसंस्करणोन्मोचनम्



भागवतमहापुराणपारायणपूजनोत्सव:



जातीयचर्चासत्रे भाषमाणा:
कुलपतय: प्रो. गंगाधरपण्डा



वैष्णवान् सम्मानं कुर्वन्ती
विभागाध्यक्षा प्रो. मिनतिरथ:




आचार्यचरणानां
प्रो. रामतीर्थमिश्रमहोदयानां सम्माननम्



शुभाशिषं प्रयच्छन्त: व्रजेन्द्रनन्दनदासमहाभागा:




विशिष्टव्याख्यानमालायां भाषमाणा: प्रो. रामतीर्थमिश्र: